॥ श्रीः ॥

ಸರ್ವಮೂಲ ಭಾಗ ೪.

श्रीमध्वानंद तीर्थ (पूर्णप्रज्ञ) भगवत्पादा-चार्य विरचित

श्री सर्वमूलांतर्गत –

ऋक् (संहिता) प्रस्थान ग्रंथः

# – ऋग्भाष्यम् –

ऋक् संहितायुतम् (५४३-६१२)

ಶ್ರೀ ಬಸವರಾಜ ಪ್ರಿಂ. ಪ್ರೆಸ್, ಹಾವೇರಿ.



श्रीः

श्रीमदानन्दतीर्थ (पूर्णप्रज्ञ) भगवत्पादाचार्य विरचित

श्री सर्वमूलांतर्गत

# ऋक् (संहिता) प्रस्थान ग्रन्थः

१. ऋग्भाष्यम् (ऋक् संहितायुतम्) ५२३-६१२

[ प्रथमाष्टके तृतीयाध्याये एकविंशवर्गपर्यन्तम्
प्रथममण्डले चत्वारिंशत्सूक्तात्मक संहितापर्यन्तं वा ]

# ऋग्भाष्यम्

श्रीमद्धनुमद्भीममध्वान्तर्गतरामकृष्णवेदव्यासात्मकलक्ष्मी-हयग्रीवाय नमः ॥ हरिः ॐ ॥ नारायणं निखिलपूर्णगुणार्णमुच्चसूर्यामितद्युतिमशेषनिरस्तदोषम् । सर्वेश्वरं गुरुमजेशनुतं प्रणम्य वक्ष्याम्यृगर्थमतितुष्टिकरं तदस्य ॥ ओमशेषगुणाधार इति नारायणोऽप्यसौ । पूर्णो भूतिवरोऽनन्तसुखो यद्व्याहृतीरितः ॥ गुणैस्ततः प्रसविता वरणीयो गुणोन्नतेः । भा-रति-ज्ञानरूपत्वाद्भर्गो ध्येयोऽखिलैर्जनैः । प्रेरकोऽशेषबुद्धीनां स गायत्र्यर्थ ईरितः ॥ छ ॥

स पूर्णत्वात्पुमान्नाम पौरुषे सूक्त ईरितः । स एवाखिलवेदार्थः सर्वशास्त्रार्थ एव च । 'स एव सर्वशब्दार्थ' इत्याहोपनिषत्परा । 'ता वा एता ऋच' इति विशेषेणाप्यृगर्थता । 'यो देवानामि'ति श्रुत्या देव नाम्नां विशेषतः । स्पष्टत्वात्तद्गतत्वेन ॥ छ ॥

तत्राऽहाग्रे ऽग्निनामकम् । अग्रणीत्वं यदग्नित्वमित्यग्रे नाम तद्भवेत् । एवमेवाह भगवान्निरुक्तिं बादरायणः । 'यथैवाग्न्यादयः शब्दाः प्रवर्तन्ते जनार्दने । तथा निरुक्तिं वक्ष्यामो ज्ञानिनां ज्ञानसिद्धये' । इति तेन (अग्निमीळे) अग्निशब्दोऽयमग्र एवाभिपूज्यताम् । अग्रचत्वमग्रनेतृत्वमत्तिमङ्गागनेतृताम् । आह तं स्तौम्यशेषस्य पूर्वमेव हितं प्रभुम् । ऋत्विङ्नियामकत्वेन यज्ञानामृत्विजं सदा । द्योतनाद्विजयात्कान्त्या स्तुत्या व्यवहृतेरपि । गत्या रत्या च देवाख्यं

---

## ऋक्संहिता

मधुच्छन्दा वैश्वामित्रः । अग्निः । गायत्री ।

॥ ॐ ॥ अ॒ग्निमी॑ळे पु॒रोहि॑तं य॒ज्ञस्य॑ दे॒वमृ॒त्विज॑म् । होता॑रं रत्न॒धात॑मम् १

होतृसंस्थं विशेषतः । अग्निसंस्थेन रूपेण यतोऽग्निर्होतृदेवता । इन्द्रियाग्निषु चार्थानां यद्धोता होतृनामकः । रतिधारकोत्तमत्वात्स रत्नधातम ईरितः ॥१॥ (अग्निःपूर्वेभिः) स पूर्वैर्नूतनैरेष्यैर्विज्ञानादृषिनामकैः । ईड्यो देवादिभिस्सर्वैस्स च देवानिहानयेत् ॥ २ ॥ (अग्निनारयिं) तेनैव रयिमाप्नोति वित्तं विद्याधनात्मकम् । दिवसे दिवसे नित्यं पुष्टिमेव न हीनताम् । यशश्च पुत्रसंयुक्तं वीर्यवत्तममेव वा ॥ ३ ॥ (अग्नेयं) यं यज्ञं परितो भूत्वा रक्षसि त्वं सदैव च । विधिमार्गस्थितं देवान्स एवाप्नोत्यसंशयम् ॥ ४ ॥ (अग्निर्होता) सोऽखिलग्रहणप्रज्ञः सद्गुणैः सन्ततोऽखिलम् । यमयत्यग्र्यकीर्तीनामुत्तमो विबुधैः सह । आगन्ताऽखिलभक्तानां पूजास्वीकारतत्परः ॥ ५ ॥ १ ॥ (यदङ्ग) यजमानाय यद्भद्रं कर्तुमिच्छसि सत्प्रिय । त्वच्चेष्टयैव कर्माणि वर्तयित्वा तदीहनम् । तवैव सत्यमङ्गानां रसयद्वाङ्गिगो हरिः । अङ्गिरा अङ्गिरः पुत्रो यतोऽग्निरभवत्क्वचित् ॥ ६ ॥ (उपत्वा) वस्तर्दिनमहोरात्रमभीष्टप्राणिनां सदा । अल्पा अपि वयं बुद्ध्या त्वामुच्चगुणमीश्वरम् । उपयाम मनःकर्मवाग्भिस्त्वन्नमसंभराः ॥ ७ ॥ (राजन्तं) देदीप्यमानं स्वे सद्मन्यध्वरेशं सदावृधम् । यथार्थज्ञानगोपं त्वामुपेमसि ॥ ८ ॥ (सनः) पितेव नः । सूपाश्रयो भव त्वं च

---

अग्निः पूर्वेभिर्ऋषिभिरीड्यो नूतनैरुत । स देवाँ एह वक्षति २

अग्निना रयिमश्नवत्पोषमेव दिवेदिवे । यशसं वीरवत्तमम् ३

अग्ने यं यज्ञमध्वरं विश्वतः परिभूरसि । स इद्देवेषु गच्छति ४

अग्निर्होता कविक्रतुः सत्यश्चित्रश्रवस्तमः । देवो देवेभिरा गमत् ॥ ५ ॥ १ ॥

यदङ्ग दाशुषे त्वमग्ने भद्रं करिष्यसि । तवेत्तत्सत्यमङ्गिरः ६

उप त्वाग्ने दिवेदिवे दोषावस्तर्धिया वयम् । नमो भरन्त एमसि ७

राजन्तमध्वराणां गोपामृतस्य दीदिविम् । वर्धमानं स्वे दमे ८



यद्वदौरससूनवे । रक्ष सन्ततसौख्याय सम्यक्सत्त्वाय वा सदा ॥ ॥ ९ ॥ २ ॥ १ ॥

मुनिस्तु सर्वविद्यानां भगवान्पुरुषोत्तमः । विशेषतश्च वेदानां 'यो ब्रह्माणमि'ति श्रुतिः । ऋग्वेदादिकमस्यैव श्वसितं प्राह चापरा । 'वाचो बभूवुरुशतीर्हयग्रीवादि'ति स्फुटम् । वचो भागवतेऽप्यस्ति ब्रह्माण्डेऽपि तथा परम् । 'हयग्रीवादिमा विद्याः श्वसितत्वेन निःसृताः । ब्रह्मणा स्वीकृतास्ताश्च रुद्रशेषविपा अपि । दक्षाद्याः सनकाद्याश्च शक्राद्या मनवस्तथा । जगृहुस्ते च विश्वस्मिंश्चक्रुर्व्याप्तास्ततोऽखिलाः' । उक्तं पद्मपुराणे च 'कपिलो भगवानजः। प्रोवाच ब्रह्मणे विद्या' 'हृदिस्थो बादरायणः । ओङ्कारपूर्विका विद्याः प्रेरयत्यखिलेष्वपि। सदैव ब्रह्मणे पूर्वमि'ति सात्वतसंहिता । सकृन्निगदमात्रेण गृहीतं ब्रह्मणाऽखिलम् । अन्तर्गतस्य व्यासस्य प्रसादान्नित्यशक्तितः । तेन चानन्तशक्तित्वाद्युगपत्समुदीरितम् । प्रथमप्रतिपत्तृत्वान्मुनिर्ब्रह्माऽखिलस्य च । सुपर्णोऽखिलवेदानां पञ्चरात्रस्य नागराट् । द्वितीयप्रतिपत्तृत्वान्मुनित्वे संप्रकीर्तितौ । यः पश्यति स्वयं वाक्यं स ऋषिस्तस्य कीर्तितः । अर्वाक्तु द्वादशावृत्तेरधीत्याऽप्यृषिरेव सः । यत्स्वयं प्रतिभा तस्य संशयार्थं गुरोर्वचः । सुपर्णादेर्विरिञ्चस्य केवलं धर्मकारणम् । ऋचामृषिस्ततः शक्रो यजुषां सूर्य एव च । सोमः साम्नां तृतीयास्ते प्रतिपत्तार ईरिताः । अथर्वाङ्गिरसामग्निरेकर्षिश्चाप्यथर्वणाम् । इत्युक्ताः समुदायस्य सन्त्यन्ये च पृथक्पृथक् । एतज्ज्ञानाददृष्टस्य फलस्याप्तिः स्फुटं भवेत् । द्रष्टॄणां तु चतुर्थानां ज्ञानादप्यैहिकं भवेत् । ते चैकस्यापि बहवः स्युः सूक्तस्यर्च एव वा । तस्यां तस्यामवस्थायां तत्तत्प्राप्तिविशेषतः । तेषां वाक्यस्वरूपेण प्रार्थनादिषु पश्यति ।

---

स नः पितेव सूनवेऽग्ने सूपायनो भव । सचस्वा नः स्वस्तये ॥ ९ ॥ २ ॥ १ ॥

विष्णुर्ब्रह्मा सुपर्णो वा तत्तद्योग्यार्थभेदतः । सर्ववेदाभिमानित्वाच्छ्री-
र्ब्रह्माणी च भारती । द्रष्टृचश्च सर्वविद्यानां व्याख्यातो ब्रह्मणा मरुत् ।
स्वभर्त्रनन्तरं द्रष्टृचस्तेभ्यस्तन्नोदिता हि रुक् । ताः स्तुवन्ति हरिं
नित्यं विद्याभिस्ते च सर्वशः । छन्दस्त्वेन मुनिस्त्वेन तासां स्मृति-
रुदीरिता । स्मर्तव्यास्ते च सर्वेऽपि मुनित्वेन पृथक्पृथक् । गायत्री
बृहती चैव ताः सर्वा गरुडस्तथा । ब्रह्माण्यनुष्टुबिन्द्राणी त्रिष्टुप्स्वाहेति
चोच्यते । गायत्री जगती चैव वारुणी रोहिणी तथा । अनुष्टुब्बृहती
चैव तारा पङ्क्तिः शची तथा । उष्णिक् सौरी जगत्यश्च सर्वदेवस्त्रियो
मताः । विराण्मित्रावरुणयोर्भार्ये इति च कीर्तिते । अतिछन्दांसि
सर्वाणि सर्वदेव्यः प्रकीर्तिताः । विराडिति च नामासां तास्ता
ऊनाधिकेष्वपि । निचृद्भुरिग्विराट्संज्ञा प्रस्तारेत्यादि नाम च । बह्वी-
नामेकमानेन त्वेकं नाम च युज्यते । सर्वाभिमानिता चैव तिसृणां
तु यथाक्रमम् । देवता सर्वविद्यानां स्वयं नारायणः प्रभुः । ऋते
तत्र प्रसिद्धाश्च देवता श्रीस्तथाऽत्र च । ऋते प्रसिद्धा ब्रह्मैव ततस्तेन
क्रमेण च । पूर्वप्रसिद्धवर्जं तु शक्रान्ता देवता मताः । ब्रह्मवायू
गिरौ वीन्द्रशेषरुद्राश्च तत्स्त्रियः । शक्रकामौ कामपुत्रमनुदक्षाङ्गिर-
स्सुताः । तद्वच्छची रतिः सूर्यसोमधर्मादि तत्स्त्रियः । प्रधानमरुतो
वारिपतिरग्निश्च मारुताः । निर्ऋतिः स्त्रियश्च सूर्यादेरश्विनावितरे तथा ।
अनन्तकोटिशतकदशाधाद्यंशतः क्रमात् । ज्ञानभक्तिबलैश्वर्यपूर्वाखिल-
गुणैरपि । मुक्तावपि क्रमो ह्येष देवता उदिता इमाः । इन्द्रावरा
विशेषेण लिङ्गेनैव पृथक्पृथक् । देवतास्तत्र तत्र स्युरेष एव परो विधिः ।
वेदादिवर्णपर्यन्तैर्मूर्तयः केशवस्य तु । समासव्यासयोगेन वाच्या-
स्तात्पर्यतः पृथक् । यथायोगं यथान्यायमन्यासामपि मूर्तयः ।
ऋक्संहितायां स्वाध्याये निरुक्ते व्यासनिर्मिते । प्रवृत्ते चैतदखिलमुक्तं
हि प्रभुणा स्वयम् । सर्वे वेदाश्च नामानि ता वा एता ऋचस्तथा ।



इन्द्रं मित्रं वरुणमित्याद्यत्र च प्रमा परा । 'देवता तारतम्यं च सर्वोत्कृष्टं
च केशवम् । ज्ञात्वैव मुच्यते ह्यस्मान्नान्यथा तु कथञ्चन' । इति
पैङ्गिश्रुतिश्चाह दृश्यन्तेऽत्र च सर्वशः । न ते महित्वमित्यादिनैश्वरानेव
केवलान् । गुणान्विष्णोः श्रुतिर्ह्याह नैव दोषान्कथञ्चन । जाता
परिबभूवेति मर्यादां ब्रह्मणोऽपि हि । नैव रेमे बिभेद्ब्रह्मा नासी-
दित्यादिकानपि । दोषान्रुद्रे च तानेव नमिनन्तीति पूर्वकान् । यं
कामये तं तमुग्रं रुद्राय धनुरित्यपि । अस्य देवस्य मा शिश्नदेवा अपि
गुरित्यपि । घ्नञ्छिश्नदेवानित्याद्या दोषा बहव ईरिताः । ततो वितिष्ठे
योनिः स एतावत्यहमित्यपि । अन्याश्रयत्वं देव्याश्च कथितं बहुशोऽपि
हि । तदाश्रयत्वमन्येषामपि तत्रैव निश्चयात् । ब्रह्मैवाग्र इति ह्युक्त्वा
रुद्रादीनां ततो जनिः । उक्ता जातानि विश्वानि स पर्यभवदित्यपि ।
यस्य च्छायामृतं मृत्युरिति चादरतोऽब्रवीत् । 'अनन्तादवरेशाना तस्याः
प्राणस्ततश्च वाक् । तस्या रुद्र उमा तस्मादिन्द्रस्तस्यास्ततोऽपरे' । सौपर्ण-
श्रुतिरित्याह सप्त क्षितय इत्यपि । वायुरस्मा उपामन्थद्विश्वदेवाय
वायवे । विश्वैर्देवैः स इत्याद्याः प्रमा अत्रापरा अपि । 'नारायणोऽ-
दितिर्वायुर्वाणी रुद्र उमा विभुः । इतरे च क्रमाद्धीनाः शतांशा-
द्वायुतोऽवराः' । इति बर्कश्रुतिश्चाह शक्रात्सप्तक्षितिश्रुतिः । अयं त
एमि तन्वेति पूर्वा अन्या अपि स्फुटम् । वायोराधिक्यमप्याहु'रिन्द्रं
सोमं हुताशनम् । सूर्यं रुद्रमिमान्पञ्चदेवानेको महात्मनः । सृजत्यत्ति
महान्प्राण' इति चाह तुरश्रुतिः । विहिसोतोरसृक्षत नेन्द्रं देवममंसत ।
न यस्येन्द्र इति ह्याह विष्णोरिन्द्रस्य हीनताम् । वेधा अजिन्वदित्यादि-
वचनं विष्णुनामतः । आनन्दश्रुतिरप्यस्य जीवतामेव दर्शयेत् । आह
सूर्यादपीन्द्रस्य वायोर्विष्णोरपीशताम् । यः सूर्यं य उषसं म्रियन्ते
पञ्चदेवताः । चक्षुषा द्यौश्चादित्यश्च चक्षोः सूर्यो अजायत । यमादित्यो
न वेदेति पूर्वा श्रुतिरथापराः । 'विष्णोर्वातो अजनिष्ट वातादिन्द्रस्ततो

रविः। सोमश्चेति लयोऽप्येवं पूर्वपूर्वे गुणाधिकाः'। 'विष्णोः प्राणो अजनिष्ट प्राणादिन्द्रो रविर्विधुः। लयोऽप्येतादृशस्तेषां पूर्वःपूर्वो गुणाधिकः'। तुरश्रुतिश्च सौपर्णी पिङ्गश्रुतिरपीदृशी। अतः सर्वाधिको विष्णुर्निर्णीतः श्रुतिसञ्चयात्। अतो दोषवचो यत्र तद्वाक्यमवरं वदेत्। निर्दोषतैव विष्णोस्तु क्रमान्मध्यगतेष्वपि। 'त्रयोऽर्थाः सर्ववेदेषु दशार्थाः सर्वभारते। विष्णोः सहस्रनामापि निरन्तरशतार्थकम्'। इति स्कान्दवचो यस्मादर्थभेदव्यपेक्षया। निर्दोषत्वं हरेर्वक्ति दोषमन्येष्वपि क्रमात्। तारतम्यस्य विज्ञप्त्यै वचो दोषस्य चार्थवत्। गुणाः श्रुता इति ह्याह गुणैक नियतिं हरौ। 'निर्दोषगुणपूर्णश्च विष्णुरेको न चापरः। अपूर्णा दोषरहिता मायैका तद्वशैव च। अदोषः प्रायशो ब्रह्मा दोषवन्तः क्रमात्परे'। इति मान्यश्रुतिश्चाह भेदोऽर्थानां ततो मतः। रूढिमेव समाश्रित्य विभज्यार्थान्यथाक्रमम्। विदोषगुणपूर्त्यर्थं विष्णौ योगार्थमानयेत्। पश्चादेव यथायोगमितरेष्वपि संनयेत्। ऋग्वेदसंहितायां च प्रभुणैवं समीरितम्। पृथग्रूपाणि विष्णोस्तु देवतान्तरगाणि च। अग्न्यादिसूक्तवाच्यानि नाम्ना सूक्तभिदा भवेत् ॥ छ ॥

नकिर्माकिः स्मसीत्यादिप्रोक्ताऽधिक्यविवक्षया। आधिक्योऽधिकमित्येव हरिणा सूत्रमीरितम्। कृत्वीहत्वीति पूर्वाश्च तृतीयोऽतिशये यतः। विश्लिष्टार्थे च विश्लिष्टमूनार्थे चोनमिष्यते। व्यत्ययोऽभेदकरणस्वातन्त्र्येषु समीरितः। अभेदो हरिरूपाणां गुणानां च क्रियासु च। तस्यैवावयवानां च भेदः श्रीब्रह्मपूर्वकैः। मुक्तैरपि जडैर्भेदः कैमुत्यादेव दृश्यते। ऋग्वेदसंहितायां च प्रोक्तमेतत्समस्तशः। 'अभेदः स्वगुणाद्यैश्च मुक्तानामपि सर्वशः। भेदाभेदस्त्वभेदश्च गुणैः संसारिणामपि। जडानामंशतो भेदः समुदायेन चोभयम्। मनुष्यगन्धर्वपितृगणकार्मिकतात्विकाः। देवाः शक्रः



शिवो ब्रह्मा मुक्तौ सौख्यादिभिर्गुणैः। शतायुतोत्तरा नित्यमन्योन्यप्रीतिसंयुताः'। इति सिद्धान्तगं वाक्यं स्वयं भगवतेरितम्। 'स्वाध्यायस्तत्त्वविज्ञानं विष्णुभक्तिर्विरागता। निषिद्धकर्मसन्त्यागो विहितस्य सदा क्रिया। सदा विष्णुस्मृतिश्चैव केवलं मोक्षसाधनम्। एतैर्विना न मोक्षः स्याद्धवेदैतैरपि ध्रुवम्। ऋषिच्छन्दोदैवतानि ज्ञात्वार्थं चैव भक्तितः। स्वाध्यायेनैव मोक्षः स्याद्विरक्तस्य हरिस्मृतेः। जप्येनैव तु संसिद्ध्येद्ब्राह्मणो नात्र संशयः। कुर्यादन्यन्न वा कुर्यान्मैत्रो ब्राह्मण उच्यते। तस्मान्नित्यं हरिं ध्यायन्कुर्यात्स्वाध्यायमञ्जसा। ऐहिकामुष्मिका भोगा रक्तस्यान्यस्तु मुच्यते'। इति स्वाध्यायवचनं स्वयं भगवतोदितम्। 'स्वाध्यायात्तु प्रवचने सहस्रगुणितं फलम्। अर्थद्रष्टुः कोटिगुणं ततोऽनन्तं नियामके। तर्कागमाभ्यां नियतिं यः करोत्यधिकं ततः। पूर्णं वेदाखिलद्रष्टुर्ब्रह्मणः फलमुच्यते। दार्ढ्यमेवानुदात्तार्थ उदात्तस्योच्चताऽर्थता। नीचता स्वरितस्यार्थः प्रचयस्य यथास्थितिः। समाहारेऽखिला अर्थाः स्वरार्थानामियं स्थितिः। स्तुत्यधर्मस्य भेदेन पदाद्यादिस्वरे भिदा। साधारणो विधिस्त्वेष विशेषो यत्र यत्र च। क्रमादेव तदन्येषामृष्यादीनां स्वयोग्यतः। विपर्ययार्थकथने विपरीतं तथा तमः। यावत्प्रयोजको ज्ञाने तावत्तावच्छुभाधिकः। तथैव विपरीतोऽपि स्मृतौ ज्ञाने च तत्समम्। तमोनिरयमानुष्यस्वर्गमोक्षातिरेकतः। योग्यतातारतम्येन फलं सर्वेषु चोच्यते'। इति प्रवृत्तवचनं विवेकेऽप्येतदीरितम्। 'यादृशो योग्यतां यायात्स ज्ञेयोऽर्थस्तथा स्फुटम्। अनन्तनियमैर्युक्ता अनन्तार्थविशेषिणः। वेदा इति समासेन नियमोऽयं समीरितः' ऋक्संहितागतं वाक्यमिति चान्यन्नियामकम्। तस्माद्वन्द्याश्च पूज्याश्च ब्रह्माद्या ज्ञानयोजकाः। गुरुत्वेन क्रमादेव विशेषेणैव केशवः। आरभ्य स्वगुरुं यावद्विष्णुरेवोत्तरोत्तराः। क्रमान्निष्फलताऽन्यत्र गुरुतत्त्वे समीरिता ॥ छ ॥

एवं स्थितेऽग्निगं विष्णुमग्निनामानमेव च । मधुच्छन्दा ऋक्शतेन वाय्वादिगतमेव च । साग्न्यादिं स्तौति सद्भक्त्या तत्तन्नामानमेव च ॥ छ ॥

(वायवायाहि) बलत्वादयनाच्चैव वायुरित्यभिधीयते । वात्यायुरिति वा ज्ञानाद्भरणादाश्रयत्वतः । वय बन्धन इत्यस्मात्संसाराद्व्र्ययादपि । व्येत्यस्मिन्निति वा वायुर्वयश्रेष्ठत्व इत्यपि । मुख्यतो वासुदेवे ते गुणाः सन्त्येव सर्वशः । अनिषिद्धास्तदन्येषु यथायोग्यतया मताः । दर्शतस्ततदृष्टित्वात्सर्वज्ञोऽसौ यतो विभुः । भक्त्याद्यलङ्कृताः सोमा मनांस्यन्ये हिरण्यतः । हिरण्यालङ्कृता यस्माद्धूयन्ते वायवे सुताः । तान्पाहि श्रुधि चाह्वानं स्वातन्त्र्ये व्यत्ययोऽप्ययम् । मनोऽपि भोग्यमीशस्य प्रीतिमात्रेण केवलम् । गुणाधिक्यं येन भवेद्वेदस्यार्थः स एव हि । प्रयोजकत्वान्नान्यस्य फलाभावात्तदर्थता । उपक्रमादयो यत्र तात्पर्यार्थस्स एव हि ॥ १ ॥ (वायउक्थेभिः) स्तुवन्ति शास्त्रैः स्तोतारो यथावद्यज्ञवेदिनः ॥२॥ (वायोतव) वात्त्वत्संपर्किणी यज्ञकृते प्रापयतीप्सितम् । सोमपायातिमहती महार्थत्वात्त्वदर्थतः ॥ ३ ॥ (इन्द्रवायू) इन्द्रः स परमैश्वर्यादिदमुद्दिश्य च द्रुतेः । ददर्शेदं दीप्तिमत्त्वादिदं रातीति वा भवेत् । सोमाभिमानिनो देवा वामिच्छन्ति हि सोमगाः । प्रियैरुपागतं तेनोपेन्द्रः सङ्कर्षणो हरिः । द्विरूपत्वाद्बहुत्वं च विशेषादेव केवलम् । एकस्यैव हरेर्नात्र भेदः शङ्क्यः

मधुच्छन्दा वैश्वामित्रः । १-३ वायुः; ४-६ इन्द्र-वायू;
७-९ मित्रा-वरुणौ । गायत्री ।

वायवा याहि दर्शतेमे सोमा अरंकृताः । तेषां पाहि श्रुधी हवम् १
वाय-उक्थेभिर्जरन्ते त्वामच्छा जरितारः । सुतसोमा अहर्विदः २
वायो तव प्रपृञ्चती धेना जिगाति दाशुषे । उरूची सोमपीतये ३
इन्द्रवायू इमे सुता उप प्रयोभिरा गतम् । इन्दवो वामुशन्ति हि ४





कथञ्चन । 'एकमेवाद्वितीयं त''न्नेह नानास्ति किञ्चन' । 'मृत्योः स मृत्युमाप्नोति य इह नानेव पश्यति' । 'यथोदकं दुर्गे वृष्टं पर्वतेषु विधावति । एवं धर्मान्पृथक्पश्यंस्तानेवानुविधावति' । उक्त्वा धर्मान्पृथक्त्वस्य निषेधादेवमेव हि । विशेषो ज्ञायते श्रुत्या भेदादन्यश्च साक्षितः ॥ ४ ॥ (वायविन्द्रश्चचेतथः) विजानतः सुतानन्नपतौ सूर्ये सदास्थितौ । द्रवद्द्रुतं सुतात्पर्यद्योतकोऽभ्यास इष्यते ॥ ५ ॥ ३ ॥ (वायविन्द्रश्चसुन्वतः) यजन्सुन्वन्कृतस्यानुसारि कर्मैव निष्कृतम् । तदर्थं क्षिप्रमायातं धियेत्थं भूतयाऽचलौ । नरौ तावविनाशित्वादुपचारः कचिद्भवेत् । अमरत्ववद्यतो मोक्षो देवतानां सुनिश्चितः ॥ ५ ॥ (मित्रंहुवे) मित्वा त्रातीति मित्रोऽयं मितमह्वा करोति वा । मितं रातीति वा नित्यं मितं रमयतीति वा । आवृणोतीति वरुणस्तमसाऽज्ञानतोऽपि वा । वरमुन्नयतीत्यस्माद्वरानन्दत्वतोऽपि वा । पूता दक्षा अनेनेति पूतदक्ष इतीरितः । तमाह्वयामि सुखिनं शमदन्रमते यतः । अनूनसुखभोक्तृत्वाद्रिशादा इति कीर्तितः । हरिर्घृतः सुशुद्धत्वाद्घृताची च तदञ्चनात् । स्वधीति साधको विष्णुर्भक्तानां च यथार्थतः ॥ ७ ॥ (ऋतेन) नित्यवृद्धः स भगवानृतेनानुपचारतः । ऋतस्पृग्वेदवाच्यत्वादन्यौ चेद्भगवानृतः । ऋ गतावित्यतः सर्ववस्तुष्वनुगतत्वतः । तेन वृद्धौ तत्स्पृशौ च सर्वदा मित्रवारिपौ । संहितायां तु दैर्घ्यादिरुक्ताधिक्ये पदेऽन्यथा । अनन्यार्थत्वविज्ञप्त्या ईशाथे च महाक्रतुम् महत्सुखं वा ॥ ८ ॥ (कवीनः) तुविजौ ब्रह्मजातौ तथाविधौ ।

वायविन्द्रश्च चेतथः सुतानां वाजिनीवसू । तावा यातमुप द्रवत्
॥ ५ ॥ ३ ॥
वायविन्द्रश्च सुन्वत आ यातमुप निष्कृतम् । मक्ष्वि१त्था धिया नरा ६
मित्रं हुवे पूतदक्षं वरुणं च रिशादसम् । धियं घृताचीं साधन्ता ७
ऋतेन मित्रावरुणावृतावृधावृतस्पृशा । क्रतुं बृहन्तमाशाथे ८

हरिस्तथैव भूतत्वात्स्थानं क्षय इहोच्यते । कर्मापसश्च कर्तारं दक्षं कर्तारमेव वा । अस्मदर्थे दधाते तौ नित्यं बुद्धौ गतागतौ ॥ ९ ॥ ॥ ४ ॥ २ ॥

(अश्विनायज्वरीः) अन्नानि यज्ञयोग्यानि क्षिप्रहस्तौ शुभाधिपौ । बहुगोपौ बहुभुजौ नो योयजतमश्विनौ । यज्ञे वृतान्स्वभागान्वा संयोजयतमाशु वै । आशुवानाद्गतेरश्वी क्षिप्रावगतितोऽथवा । अश्नुतेऽखिलमित्येवाप्यश्वजत्वात्तथाऽश्विनौ ॥ १ ॥ (अश्विनापुरुदंससा) बहुकर्मकृतौ सौख्यवीर्यात्मिकया धिया गिरः । अस्मदीयाः सम्भजतं धिष्ण्यौ सर्वाश्रयौ सदा ॥ २ ॥ (दस्रा) भेदकौ सर्वशत्रूणां दस्रौ संबन्धिनौ हि वाम् । सुता युवाकवः सोमा यज्वनः स्तृतबर्हिषः । नासत्यौ नासिकासंस्थौ नैव चासद्गुणौ क्वचित् । रुजां द्रावणतो रुद्रो वायुस्तदनुवर्तनात् । स्नेहतोऽनुवशत्वाद्वा तन्मार्गगतितोऽथवा । कस्मिन्नहमिति श्रुत्या वासुदेवोऽश्विनावपि । रुद्रवर्तनिशब्दोक्ताः ॥ ३ ॥ (इन्द्रायाहिचित्रभानो) चित्रं भद्रं रतं चितौ । चिद्रतेश्चायनीयत्वाददद-नाद्वा चितो भिदा । तादृशा रश्मयो ज्ञानमस्येति भगवान्परः । चित्रभानुरिति प्रोक्तस्तेजो वा तादृशं प्रभोः । त्वदिच्छव इमे सोमाः पटीभिः सूक्ष्मतन्तुभिः । विस्तृत्य शोधिताः सूक्ष्मप्रमाभिर्वा मनांसि च । सोमानां मनसां चैव देवताः सोमरश्मिगाः । सोमभृत्याः



---

कवी नो मित्रावरुणा तुविजाता उरुक्षया । दक्षं दधाते अपसम् ॥ ९ ॥ ४ ॥ २ ॥

मधुच्छन्दा वैश्वामित्रः । १-३ अश्विनौ ; ४-६ इन्द्रः ;
७-९ विश्वेदेवाः ; १०-१२ सरस्वती । गायत्री ।

अश्विना यज्वरीरिषो द्रवत्पाणी शुभस्पती । पुरुभुजा चनस्यतम् १
अश्विना पुरुदंससा नरा शवीरया धिया । धिष्ण्या वनतं गिरः २
दस्रा युवाकवः सुता नासत्या वृक्तबर्हिषः । आ यातं रुद्रवर्तनी ३
इन्द्रा याहि चित्रभानो सुता इमे त्वायवः । अण्वीभिस्तना पूतासः ४



समस्तस्य सोम एवाधिपो हरिः ॥ ४ ॥ (इन्द्रायाहिधियेषितः) अस्मद्बुद्ध्या प्रार्थितो वा स्वबुद्ध्या प्रेरितोऽपि वा । ब्राह्मणैः प्रेरितो भक्त्या वदतो होतुरञ्जसा । ब्रह्माणि सोमयुक्तानि यजमानस्य वेच्छतः । उपाया ह्यपि यः कोऽपि साधको यज्ञकृन्मतः । मानसो वाचिको वा स्याद्यज्ञो होता ह्वयन्स च ॥ ५ ॥ (इन्द्रायाहितूतुजानः) वेगवांस्तूतुजानः स्यात्संसारमुपसंहरन् । वर्तते येन हरिवा हरिभिर्वर्ततेऽथवा । हरणाद्विषयाणां च प्राणा हरय ईरिताः । तेषु वर्तत इत्यस्मात्तान्वाऽथ गमयेदसौ । हरिवा हरिवान्वापि विष्णुना वर्ततेऽथवा । चनो मन इह प्रोक्तं सुखं च क्वचिदीर्यते ॥ ६ ॥ ५ ॥ (ओमासः) आसमन्तात्स्वीकृता मा ओमा इति च शब्दिताः । ॐनामा भगवान्विष्णुस्तेन वा निर्मिताः सुराः । ओता मानेषु भावेषु प्रोता ओमा इतीरिताः । प्रजाश्चर्षणयः प्रोक्ता विश्वे ते च प्रवेशनात् । सर्वे वाथ विशां वानाच्छब्दः कस्मै यथा भवेत् । दातारो यजमाना वा ॥ ७ ॥ (विश्वेदेवासोअप्तुरः) अप्तुरः कर्मवेगिनः । उस्रास्तु रश्मयश्चैव स्वसराणि दिनानि च ॥ ८ ॥ (विश्वेदेवासोअस्रिधः) असंसारादस्रिधस्ते देवाश्चेन्मोक्षनिश्चयात् । यथेष्टनिश्चितज्ञाना एहि मायाः समन्ततः । अदुःखत्वादद्रुहस्ते मेधं यज्ञं जुषन्तु नः । वह्नयो वहनादस्य ॥ ९ ॥ (पावकानः) शोधकत्वात्तु पावका । सरणात्सर्वगत्वेन सर्वज्ञो वासरो हरिः । सरसः सरतित्वाद्वा तद्वत्येव सरस्वती । हरौ गुणाः सरश्शब्दा देवी तु हरिवाचिनी । हरिप्रियत्वतो वायुः सरस्वांस्तत्प्रियाऽथवा ।

---

इन्द्रा याहि धियेषितो विप्रजूतः सुतावतः । उप ब्रह्माणि वाघतः ५
इन्द्रा याहि तूतुजान उप ब्रह्माणि हरिवः । सुते दधिष्व नश्चनः ॥ ६ ॥ ५ ॥

ओमासश्चर्षणीधृतो विश्वे देवास आ गत । दाश्वांसो दाशुषः सुतम् ७
विश्वे देवासो अप्तुरः सुतमा गन्त तूर्णयः । उस्रा इव स्वसराणि ८
विश्वे देवासो अस्रिध एहिमायासो अद्रुहः । मेधं जुषन्त वह्नयः ९

गुणस्वेन ततत्वाद्वा भगवांस्तु सरस्वती । स्त्रीरूपश्चैव पुंरूपो भगवान्न नपुंसकः । स्त्रीपुंदोषविहीनत्वादपि तच्छब्दगोचरः । अन्नेनो वाजिनामीशो वाजिनी सूर्य उच्यते । वाजीनच्छन्दसां वापि स्वामी प्रोक्तः सवाजिनी । छन्दांस्यश्वा यतस्तस्य ते चेना अन्यवाजिना । अन्नवत्त्वाद्वाजिनी वाग्ज्ञानयुद्धत्वतोऽपि वा । सपुत्रो वागुमा तस्याः पुत्री तद्वाजिनीवती । सरस्वती हरिर्वापि यज्ञं वहतु नोऽशनैः । अन्नदा हि सदा देवी धिया सह वसेद्यतः । धियावसुर्नित्यबोधा ॥ १० ॥ (चोदयित्री) सुवाचां प्रेरका सदा । सुबुद्धिज्ञापिका सैव स्वातन्त्र्याल्लुप्तयो भवेत् । अनेनैव प्रकारेण सैव यज्ञादिधारिणी ॥ ११ ॥ (महोअर्णः) महो अर्णः परं ब्रह्म तेजस्त्वाच्च महत्त्वतः । अरमानन्दरूपत्वाण्णो हि निर्वृतिवाचकः । तज्ज्ञापयति सा देवी ज्ञानं दत्वा महत्तरम् । महो अर्णः स्वयं देवः स्वमात्मानं प्रकाशयेत् । विराजयति विश्वाश्च धियः सुज्ञानदानतः ॥ १२ ॥ ६ ॥ ३ ॥ १ ॥

सूक्तं त्वनारतं प्रोक्तमनुवागेककालिका । अन्यथात्वं च तत्र स्यादावापोद्वापतस्त्वृचाम् । वेदानन्तत्वविज्ञप्त्यै तौ चक्रे बादरायणः । 'ऋचः स ऋच उद्धृत्य ऋग्वेदं कृतवान्प्रभुः । यजूंषि निगदाच्चैव तथा सामानि सामतः' । एवं पुराणवचनादुद्धृता हि ततस्ततः । ऋचः शाखात्वमापन्नाः शिष्यतच्छिष्यकैरिमाः । मानस्तेनेति पूर्वासु ह्यूनता दृश्यतेऽर्थतः । शुनःशेपोदिताभ्यश्च पठ्यन्तेऽन्यत्र काश्चन । अत्राप्यक्रमतो दृष्टिरिति नैकक्रमो भवेत् । अनन्तत्वात्तु वेदानां प्रायः कर्मानुसारतः । सङ्क्षेपं कृतवान्देवः शिष्याश्च तदनुज्ञया । अष्टकाध्याय-

---

पावका नः सरस्वती वाजेभिर्वाजिनीवती । यज्ञं वष्टु धियावसुः १०
चोदयित्री सूनृतानां चेतन्ती सुमतीनाम् । यज्ञं दधे सरस्वती ११
महो अर्णः सरस्वती प्र चेतयति केतुना । धियो विश्वा वि राजति
॥ १२ ॥ ६ ॥ ३ ॥ १ ॥





वर्गादिभेदं च कृतवान्प्रभुः । स्वाध्यायविश्रमार्थाय तस्मात्क्रमविपर्ययः । तत्र तत्रैवान्तरिता दृश्यन्ते च खिला अपि । यत्रार्थे न विशेषोऽस्ति पदान्तरिततात्र च । यत्राल्पोऽपि विशेषोऽस्ति पदं नान्तरितं भवेत् ॥ छ ॥

(सुरूपकृत्नुं) विष्णुं सुरूपकर्तारमभिप्रेतार्थसिद्धये । त्राणाय वा कामधेनुमिव दोहाय तत्स्थितेः । दिनेदिने स्वाह्वयामो ॥ १ ॥ (उपनः) ज्ञानदोऽस्यैव चाधिकम् । ज्ञानाख्यरयियुक्तस्य हिरण्यादिमतोऽपि वा । सुखकारी भवां ॥ २ ॥ (अथाते) स्तस्माल्लभेम सुमतीस्तव । अन्ते मितास्त्वद्विषया मतयो ह्युत्तमोत्तमाः । अस्माननतीत्य मा पश्यकरुणार्द्रदृशा सदा ॥ ३ ॥ (परेहि) मन्मनो वाऽथ शक्रो वा दूरेऽपि परमेश्वरम् । गच्छाग्राह्यमनष्टं च व्याप्तचित्तं य एव च । सखिभ्य उत्तमो नित्यम् ॥ ४ ॥ (उतब्रुवन्तु) निदस्तस्य समीपगाः । तेऽपि ब्रुवन्तु नो देवं प्रापुर्ये चान्यतोऽपि तम् । निर्गत्याज्ञानतस्तस्माद्दधाना ईश एव च । दुवः प्राणान्ब्रुवं त्वेव तेऽपि नः परमेश्वरम् ॥ ५ ॥ ७ ॥ (उतनः) अरयोऽपि प्रजा अस्मान्वोचेयुः सुभगान्सदा । शत्रुभेदिंस्तवेन्द्रस्य स्यामैवानुग्रहे सुखे ॥६॥ (एमाशुं)

---

मधुच्छन्दा वैश्वामित्रः । इन्द्रः । गायत्री ।

सुरूपकृत्नुमूतये सुदुघामिव गोदुहे । जुहूमसि द्यविद्यवि १
उप नः सवना गहि सोमस्य सोमपाः पिब । गोदा इद्रेवतो मदः २
अथा ते अन्तमानां विद्याम सुमतीनाम् । मा नो अति ख्य आ गहि ३
परेहि विग्रमस्तृतमिन्द्रं पृच्छा विपश्चितम् । यस्ते सखिभ्य आ वरम् ४
उत ब्रुवन्तु नो निदो निरन्यतश्चिदारत । दधाना इन्द्र इद्दुवः
॥ ५ ॥ ७ ॥
उत नः सुभगाँ अरिर्वोचेयुर्दस्म कृष्टयः । स्यामेदिन्द्रस्य शर्मणि ६

आशुवीर्य तवैवाशुं सोमं क्षिप्रं मनोऽपि वा। आरभस्वोदरे तुष्ट्यै हृदि वा यज्ञभूषणम्। ईमेव पुंमदकरं मदादुत्पतनादिके। हेतुं मन्दत्वहेतुं च तत्सखीनां पुरो गतेः ॥ ७ ॥ (अस्यपीत्वा) एनं पीत्वा बहुज्ञानाऽभूस्तमोभिरनावृतः। प्रसादादेव मुक्तेषु तमो सह्यतया घनः। आवृतेरेव वृत्राणि ह्यज्ञानान्यन्नदं नरम्। प्रावो युद्धेषु योद्धारं भक्तं ज्ञानिनमेव च ॥ ८ ॥ (तन्त्वा) योधयामो वयं तं त्वां ज्ञानादिधन-लब्धये। अज्ञानाद्यस्मदरिभि ॥ ९ ॥ (योरायः) योऽशेषद्रविणावनिः। सुखदः संसृतेः पारस्तस्मा इन्द्राय गायत। कम्पोऽशेषग्रहे क्वापि लज्जायां वा पुरातने। पृथक्त्वे धृष्यतायां वा हरिणर्क्षसहितोदितः ॥ ॥ १० ॥ ८ ॥ ४ ॥

(आत्वेता ॥ ० ॥ १ ॥ पुरूतमं) सुपूर्णानां पूर्णतमं वरेण्याना-मधीश्वरम्। सुते सोमे सुखेनैव स चागायत तं प्रभुम् ॥ २ ॥ (सघ) मुक्तौ योगायासमन्ताद्भवेन्नोघोऽवधारणे। स एव भगवान्ज्ञानवित्ताय स च बुद्धिगः। बुद्धिः पुराश्रयत्वेन पुरन्धिः पत्न्यथापि वा। पत्न्यर्थत्वे तु तादर्थ्यं सोऽन्नैः सह न आव्रजेत् ॥ ३ ॥ (यस्यसंस्थे)

---

एमाशुमाशवे भर यज्ञश्रियं नृमादनम्। पतयन्मन्दयत्सखम् ७
अस्य पीत्वा शतक्रतो घनो वृत्राणामभवः। प्रावो वाजेषु वाजिनम् ८
तं त्वा वाजेषु वाजिनं वाजयामः शतक्रतो। धनानामिन्द्र सातये ९
यो रायोऽवनिर्महान्त्सुपारः सुन्वतः सखा। तस्मा इन्द्राय गायत
॥ १० ॥ ८ ॥ ४ ॥

मधुच्छन्दा वैश्वामित्रः। इन्द्रः। गायत्री।

आ त्वेता नि षीदतेन्द्रमभि प्र गायत। सखायः स्तोमवाहसः १
पुरूतमं पुरूणामीशानं वार्याणाम्। इन्द्रं सोमे सचा सुते २
स घा नो योग आ भुवत्स राये स पुरन्ध्याम्।
गमद्वाजेभिरा स नः ३





यस्य स्थितौ न वृणुते हर्यग्रमपि शत्रवः। मनः पुरो वा विषयहरणा-न्मन एव च। बुद्धिश्च हरिशब्दोक्ते तम आदीनि शत्रवः ॥ ४ ॥ (सुतपाव्ने) सोमपे शुचयः सोमाः प्राप्त्यै दधिविमिश्रिताः। मनांसि ध्यानयुक्तानि वा यान्ति हरये सदा ॥ ५ ॥ ९ ॥ (त्वंसुतस्य) सदा पूर्णः शुभज्ञानज्यैष्ठ्यव्यक्त्यै सुताप्तये। न क्षुदादेरभिव्यक्तो भवो ॥६॥ (आत्वा) गीर्भिर्वृत प्रभो। प्रकृष्टचेतास्त्वद्भृत्यो योऽस्मै स्युः शङ्कराः सुताः ॥ ७ ॥ (त्वांस्तोमाः) व्यञ्जयन्त्यधिकं स्तोमाः साम्न्युक्थान्यृक्षु चैव हि। महागुणैर्व्यञ्जयन्तु गिरोऽस्माकमपि प्रभो। आकाशवृद्धि-वद्वृद्धिर्विष्णोः स्यान्नैव चान्यथा। 'न वर्धते नो कनीयानि'ति ह्येनं श्रुतिर्जगौ। महातात्पर्यरोधाच्च श्रुत्यर्थो नापरो भवेत्। यद्यन्यापेक्षया वृद्धिरीश त्वं स्यात्कुतोऽस्य च। अक्षितोतिरिति ह्यस्मात्पूर्णाभिप्रायतो-दिता ॥ ८ ॥ (अक्षितोतिः) अनन्तफलदं वाजमस्मत्तो लभतां स च। ददातु वा पौरुषाणि शक्तयो यत्र चाखिलाः। अतश्चानन्तशक्तित्वान्न वध्याद्याः कथञ्चन। सर्वोपेतेत्येतमर्थमभिप्रेत्याह वेदराट् ॥ ९ ॥ (मानो) मा मर्ता नस्तनूनां तु द्रोग्धारः स्युः कथञ्चन। ईशोऽस्यापाकुरु वधं तेन नो मुक्तिदानतः। मानुषेभ्यस्तनूनां च नैव नः स्युर्विपत्तयः। कालेन दैवतः प्राप्तः स्याददेहत्वतो वधः ॥ १० ॥ १० ॥ ५ ॥

---

यस्य संस्थे न वृण्वते हरी समत्सु शत्रवः। तस्मा इन्द्राय गायत ४
सुतपाव्ने सुता इमे शुचयो यन्ति वीतये। सोमासो दध्याशिरः ॥५॥९॥
त्वं सुतस्य पीतये सद्यो वृद्धो अजायथाः। इन्द्र ज्यैष्ठ्याय सुक्रतो ६
आ त्वा विशन्त्वाशवः सोमास इन्द्र गिर्वणः। शं ते सन्तु प्रचेतसे ७
त्वां स्तोमा अवीवृधन्त्वामुक्था शतक्रतो। त्वां वर्धन्तु नो गिरः ८
अक्षितोतिः सनेदिमं वाजमिन्द्रः सहस्रिणम्। यस्मिन्विश्वानि पौंस्या ९
मा नो मर्ता अभि द्रुहन्तनूनामिन्द्र गिर्वणः।
ईशानो यवया वधम् ॥ १० ॥ १० ॥ ५ ॥

(युञ्जन्ति) पौंस्यानि वासुदेवस्य ब्रध्नं वृद्धं दिवाकरम् । अरुणं चरन्तं परितो गिरीन्युञ्जन्ति सर्वदा । तैरेवान्यानि चन्द्रादि रोचनानि त्रिविष्टपे । रोचयन्ति ॥ १ ॥ (युञ्जन्त्यस्य) हरी चास्य मनोबुद्धी स्वशक्तयः । युञ्जन्त्यधिगुणत्वेन काम्यावश्वावथापि वा । विशिष्ट-पक्षसंयुक्ताविव क्षिप्रतरौ सदा । रथे देहेऽपि वा देवाः स्वमनो बुद्धिमेव च । अस्य देहे प्रयुञ्जन्ति सूर्यादीन्स्थापयन्ति च । सूर्यादि-स्थापकत्वं च ब्रह्मादीनां भवेत्सदा । शोणौ च शमणौ प्रोक्तौ सुखप्राप्तौ यतस्सदा । श्यामौ मूर्धनि शोणौ च शक्राश्वावग्रगौ स्मृतौ । धृष्टौ नॄन्प्रति तं वेशं वहन्तौ तावुभावपि ॥ २ ॥ (केतुं) अज्ञाय कुर्वन्सज्ज्ञानं हेमाहेमाय चेश्वर । उषद्भिः संप्रकाशद्भिः शक्तिभि-र्व्यक्ततामगाः । मर्या मरणवन्तोऽपि देवा एवम् ॥ ३ ॥ (आदह) हरेर्वशात् । तदैव सुखमन्वेव पुनर्गूढत्वमापिरे । स्वेच्छयैव परेशस्य शक्तयो देवता अपि । यज्ञे वाच्यं दधानाश्च नाम ॥४॥ (वीळुचित्) वीळु दृढं ह्यपि । आरुजद्भिः स्वसामर्थ्यैर्गुहायां संस्थितोऽपि सन् । वहद्भिरखिलं लोकं प्रकाशत्वानि लब्धवान् । देवैर्वैतादृशैः साकमानु-कूल्येन लब्धवान् ॥ ५ ॥ ११ ॥ (देवयन्तः) सम्यक्प्रद्योतयन्तोऽमुं मतिरूपं यथास्थितम् । विदद्भित्तं महान्तं च विश्रुतं सुगिरोऽस्तुवन् ॥ ६ ॥ (इन्द्रेण) तस्य सन्दर्शनायैव सङ्गतस्तेन शङ्करः । मखात्मा पुरुहूतो वा श्रीभूमी च सुखात्मिके ॥ ७ ॥ (अनवद्यैः) अनवद्यैर्महाज्ञानैः प्रियैर्देवगणैः सह । वायुना च सहार्चन्ति सुधीत्वा-त्परमेश्वरम् ॥ ८ ॥ (अतः) अतो हेतोरिहायाहि दिवो वा सूर्य-मण्डलात् । परिज्मन्सर्वगास्माकमधिकृत्य समर्हणम् । अस्मिन्गिरः प्राप्नुवन्ति सम्यक्परममुख्यतः । युञ्जन्तीत्यत्र बाहुल्याद्देवयन्तोऽत इत्यपि । बाहुल्याद्दृष्टितो गीर्भिर्विनार्थो नान्य इष्यते ॥९॥ (इतोवा) इतो दिवो वा पातालात्सातिं लाभस्वरूपिणम् । महतो रञ्जकाद्विष्णो-र्लोकाद्वा तमधीमहे ॥ १० ॥ १२ ॥ ६ ॥

(इन्द्रमित्) तमेव गाथिनः साम्ना स्तुवन्त्यृग्भिश्च बह्वृचाः । बृहन्तमन्यवाणीभिरपि ॥ १ ॥ (इन्द्रइत्) हर्यो विमिश्रितः । रथेऽथ वामनो बुद्ध्योर्वाङ्मात्रेणैव योगिनोः । सचा सुखेन वज्री च ज्ञानानन्दो हि धातुतः । हितश्च रमणीयश्च हिरण्यय इतीरितः ॥ २ ॥ (इन्द्रोदीर्घाय) दीर्घकालं दर्शनाय सूर्यमारोहयद्दिवि । ज्ञानैरादर-

---

मधुच्छन्दा वैश्वामित्रः । १-३ इन्द्रः, ४, ६, ८, ९ मरुतः,
५, ७ मरुत इन्द्रश्च, १० इन्द्रः । गायत्री ।

युञ्जन्ति ब्रध्नमरुषं चरन्तं परि तस्थुषः । रोचन्ते रोचना दिवि १
युञ्जन्त्यस्य काम्या हरी विपक्षसा रथे । शोणा धृष्णू नृवाहसा २
केतुं कृण्वन्नकेतवे पेशो मर्या अपेशसे । समुषद्भिरजायथाः ३
आदह स्वधामनु पुनर्गर्भत्वमेरिरे । दधाना नाम यज्ञियम् ४
वीळु चिदारुजत्नुभिर्गुहा चिदिन्द्र वह्निभिः ।
अविन्द उस्रिया अनु ॥ ५ ॥ ११ ॥
देवयन्तो यथा मतिमच्छा विदद्वसुं गिरः । महामनूषत श्रुतम् ६
इन्द्रेण सं हि दृक्षसे संजग्मानो अबिभ्युषा । मन्दू समानवर्चसा ७
अनवद्यैरभिद्युभिर्मखः सहस्वदर्चति । गणैरिन्द्रस्य काम्यैः ८
अतः परिज्मन्ना गहि दिवो वा रोचनादधि । समस्मिन्नृञ्जते गिरः ९
इतो वा सातिमीमहे दिवो वा पार्थिवादधि । इन्द्रं महो वा रजसः
॥ १० ॥ १२ ॥ ६ ॥

मधुच्छन्दा वैश्वामित्रः । इन्द्रः । गायत्री ।

इन्द्रमिद्गाथिनो बृहदिन्द्रमर्केभिरर्किणः । इन्द्रं वाणीरनूषत १
इन्द्र इद्धर्योः सचा संमिश्ल आ वचोयुजा । इन्द्रो वज्री हिरण्ययः २
इन्द्रो दीर्घाय चक्षस आ सूर्यं रोहयद् दिवि । वि गोभिरद्रिमैरयत् ३

योग्यं च प्राणात्मानं समैरयत् ॥३॥ (इन्द्रवाजेषु) बहुभिर्युध्यमानेषु
युद्धेष्वपि सदाऽव नः । दुष्टोग्रैः सदभिप्रायै-॥ ४ ॥ (इन्द्रंवयं)
महदल्पधनार्थिनः । हवामहेऽरिवर्जं तं तमसां प्रतियोगिनम् ॥
॥ ५ ॥ १३ ॥ (सनः) अस्मदीयं चरुं भोज्यमानन्दं तमपावृणु ।
मोक्षगं सर्वदातस्त्वमप्रतिद्वन्द्व नो वृषन् ॥ ६ ॥ (तुञ्जे) त्वयैव प्रेरणे
जाते तत्रतत्र य उत्तराः । तेऽपि स्तोमाः सुष्टुतित्वमस्यानन्त्यान्न
चाप्नुयुः ॥ ७ ॥ (वृषा) प्रतिवीरो वृषा वंसस्तद्धन्ता वंसगो विभीः ।
यूथान्याकर्षति यथा प्रजाः प्रेरयति प्रभुः । अल्पस्यापि प्रसिद्धैव
दृष्टान्तत्वं तु युज्यते ॥ ८ ॥ (यएकः) राजा भवति वित्तानां प्रजानां
चैक एव यः । देवगन्धर्वदैतेयपितृमानुषभेदतः । प्रजानामपि
पञ्चानां सामान्याच्च विशेषतः ॥ ९ ॥ (इन्द्रंवो) सम्यग्घवामहे
सर्वगतं च व्यक्तरूपतः । स्यातुमेकत्र वोऽर्थाय जनानोऽस्तु स
केवलः ॥ १० ॥ १४ ॥ ७ ॥ २ ॥

(एन्द्र) जयिना सहितं लाभयुक्तं वित्तं सदा बलम् । वर्षिष्ठं
सुमहद्रक्षानिमित्तं नित्यदा भर ॥ १ ॥ (नियेन) येनारीन्मुष्टियुद्धेन

---

इन्द्र वाजेषु नोऽव सहस्रप्रधनेषु च । उग्र उग्राभिरूतिभिः ४
इन्द्रं वयं महाधन इन्द्रमर्भे हवामहे । युजं वृत्रेषु वज्रिणम् ॥ ५ ॥ १३ ॥
स नो वृषन्नमुं चरुं सत्रादावन्नपा वृधि । अस्मभ्यमप्रतिष्कुतः ६
तुञ्जेतुञ्जे य उत्तरे स्तोमा इन्द्रस्य वज्रिणः । न विन्धे अस्य सुष्टुतिम् ७
वृषा यूथेव वंसगः कृष्टीरियर्त्योजसा । ईशानो अप्रतिष्कुतः ८
य एकश्चर्षणीनां वसूनामिरज्यति । इन्द्रः पञ्च क्षितीनाम् ९
इन्द्रं वो विश्वतस्परि हवामहे जनेभ्यः । अस्माकमस्तु केवलः
॥ १० ॥ १४ ॥ ७ ॥ २ ॥

मधुच्छन्दा वैश्वामित्रः । इन्द्रः । गायत्री ।

एन्द्र सानसिं रयिं सजित्वानं सदासहम् । वर्षिष्ठमूतये भर १
नि येन मुष्टिहत्यया नि वृत्रा रुणधामहै । त्वोतासो न्यर्वता २



तमांसि ज्ञानयुद्धतः । त्वत्प्रेरितानि रुन्धामः कांश्चिद्वा तुरगादिभिः ।
आवृत्त्यैवोपसर्गस्य क्रियावृत्तिर्भविष्यति ॥ २ ॥ (इन्द्रत्वोतासः)
त्वत्प्रेरिता ज्ञानरतिं दृढत्वेनाददीमहि ॥ ३ ॥ (वयंशूरेभिः) त्वया
पृतन्यतः शत्रूनभिष्याम सुयोद्धृभिः ॥ ४ ॥ (महाँइन्द्रः) यस्मा-
न्महाननादिश्च विष्णुर्जीवोऽवरस्तथा । तस्यैवास्तु महत्त्वं तन्न जीव-
गमतां स्मरेत् । आकाशवत्प्रथिम्नाऽसौ शवः सुखबले तथा ॥५॥१५॥
(समोहे) अन्यसंवहनेनापि ये तं प्राप्ता जनार्दनम् । ज्ञानलाभेन तु
नरस्त एव पशवोऽपरे । विप्राश्चैव धिया युक्ता मूर्खाः शूद्रसमा
मताः ॥ ६ ॥ (यः कुक्षिः) यः कुक्षिस्तस्य देवस्य समुद्र इव सोऽ-
खिलान् । कामान्क्षरति भक्ताय महाप इव तर्पकाः । काकुदस्तस्य
जिह्वाः स्युर्बह्व्यो बहुमुखेषु याः ॥ ७ ॥ (एवाह्यस्य) एवमेवास्य
वाणी च वेदेता महती तथा । पक्वशाखेव यजते वरदात्री विरप्शिनः ।
बलिष्ठस्य हि ते ॥ ८ ॥ (एवाहिते) सन्ति सद्योऽपि यजते हि ते ।
मावते ज्ञानिने नित्यमूतयश्च विभूतयः ॥ ९ ॥ (एवाह्यस्य) स्तोमा
उक्थानि चैवास्य तस्मै काम्यानि सर्वदा । गेयाः शंस्यानि सोमस्य
पीतये नान्यथा पिबेत् ॥ १० ॥ १६ ॥ ८ ॥

---

इन्द्र त्वोतास आ वयं वज्रं घना ददीमहि । जयेम सं युधि स्पृधः ३
वयं शूरेभिरस्तृभिरिन्द्र त्वया युजा वयम् । सासह्याम पृतन्यतः ४
महाँ इन्द्रः परश्च नु महित्वमस्तु वज्रिणे । द्यौर्न प्रथिना शवः
॥ ५ ॥ १५ ॥
समोहे वा य आशत नरस्तोकस्य सनितौ । विप्रासो वा धियायवः ६
यः कुक्षिः सोमपातमः समुद्र इव पिन्वते । उर्वीरापो न काकुदः ७
एवा ह्यस्य सूनृता विरप्शी गोमती मही । पक्वा शाखा न दाशुषे ८
एवा हि ते विभूतय ऊतय इन्द्र मावते । सद्यश्चित् सन्ति दाशुषे ९
एवा ह्यस्य काम्या स्तोम उक्थं च शंस्या । इन्द्राय सोमपीतये
॥ १० ॥ १६ ॥ ८ ॥

(इन्द्रेहि) सोमपाः सोमपर्वाणः सर्वं यस्मात्तदिच्छया । अभिष्टिरोजसा नित्यं मदं सुखमवाप्स्यसि ॥ १ ॥ (एमेनं) एनमासृजतेन्दौ च विष्णुं तं मदकारिणम् । मन्दिने विष्णवे सम्यक्कर्मिणं सर्वकर्मिणे ॥ २ ॥ (मत्स्व) स्वानन्द विश्वजीवेश मत्स्वास्मद्रक्षया सह ॥ ३ ॥ (असृग्रं) त्वन्निस्सृता वेदवाचस्त्वां प्रत्येवाप्यनारतम् । उच्चैर्मुख्यतया सम्यग्विसृष्टाः स्वपतिं प्रति । अजोषाः स्तुत्यरूपेण त्वत्सेव्यास्त्वदृते क्वचित् ॥ ४ ॥ (सञ्चोदय) अर्वाङ्नीचान्प्रति त्वस्मान्भद्रं राधः प्रचोदय । अस्त्येव ते विशेषेण प्रकृष्टं शुभमच्युतम् ॥ ॥ ५ ॥ १७ ॥ (अस्मान्) रभस्वतः शब्दवतः स्तोतॄनस्मान्यशस्वतः । तत्र त्वयि महाराये महाकीर्ते सुचोदय ॥ ६ ॥ (सङ्गोमत्) अस्मास्वतिबृहज्ज्ञानं नित्यं सन्धेहि चाक्षयम् ॥ ७ ॥ (अस्मे) विद्यां कीर्तिं सदेहान्नं बहुलाभयुतं बृहत् । प्रार्थने पौनरुक्त्यं न चोदयेति ततः पुनः ॥ ८ ॥ (वसोः) वसोर्वसूनां च पतिं देवदेवेश्वरं प्रभुम् ।

---

मधुच्छन्दा वैश्वामित्रः । इन्द्रः । गायत्री ।

इन्द्रेहि मत्स्यन्धसो विश्वेभिः सोमपर्वभिः । महाँ अभिष्टिरोजसा १

एमेनं सृजता सुते मन्दिमिन्द्राय मन्दिने । चक्रिं विश्वानि चक्रये २

मत्स्वा सुशिप्र मन्दिभिः स्तोमेभिर्विश्वचर्षणे । सचैषु सवनेष्वा ३

असृग्रमिन्द्र ते गिरः प्रति त्वामुदहासत । अजोषा वृषभं पतिम् ४

सं चोदय चित्रमर्वाग्राध इन्द्र वरेण्यम् ।

असदित्ते विभु प्रभु ॥ ५ ॥ १७ ॥

अस्मान्त्सु तत्र चोदयेन्द्र राये रभस्वतः । तुविद्युम्न यशस्वतः ६

सं गोमदिन्द्र वाजवदस्मे पृथु श्रवो बृहत् । विश्वायुर्धेह्यक्षितम् ७

अस्मे धेहि श्रवो बृहद् द्युम्नं सहस्रसातमम् । इन्द्र ता रथिनीरिषः ८

वसोरिन्द्रं वसुपतिं गीर्भिर्गृणन्त ऋग्मियम् । होम गन्तारमूतये ९



ऋग्ध्येयमाह्वयामोऽत्र गृणन्तोऽभीष्टसिद्धये ॥ ९ ॥ (सुते) अविनाश्यरिपद्दिष्टो बृहच्छूषं सुखं प्रति । सुते सुते सदूहाय देवाय बृहतेऽर्चति ॥ ॥ १० ॥ १८ ॥ ९ ॥

(गायन्ति) गायन्ति सामगास्त्वृग्भिः शंसंत्यृग्वेदिनोऽन्तिकम् । विरिञ्चास्त्वां बहुज्ञानशक्रकेतुमिवोच्छ्रितम् । व्यजान- ॥ १ ॥ (यत्सानोः) न्नुचतोऽप्युच्चं सामर्थ्यं करणे तव । ततोऽपि भूरि यत्तेन चेतत्यर्थमतो भवान् । मुक्तामुक्तसमूहेन शोभते गूढशक्तिमान् । उच्चादुच्चं विरिञ्चादिगतं कर्तृत्वमेव यत् । भूरिस्पष्टमभूत्तेन परेशस्य ततश्च सः । चेतत्यर्थानशेषांश्च महायूथेन चेष्टते ॥ २ ॥ (युक्ष्वाहि) कक्ष्याभिपूरकौ पुष्ट्या युंक्ष्व त्वं केशिनौ हरी । अथोपगम्य शृणु नो गिरो ॥ ३ ॥ (एहि) ऽभिस्वरवस्तुतिम् । प्रशंसां कुरु शब्दं च पुनर्हर्षान्महत्तरम् । ब्रह्म यज्ञं च नोऽन्तस्थो बहिष्ठश्चैव वर्धय ॥ ४ ॥

---

सुतेसुते न्योकसे बृहद् बृहत एदरिः । इन्द्राय शूषमर्चति
॥ १० ॥ १८ ॥ ९ ॥

मधुच्छन्दा वैश्वामित्रः । इन्द्रः । अनुष्टुप् ।

गायन्ति त्वा गायत्रिणोऽर्चन्त्यर्कमर्किणः ।
ब्रह्माणस्त्वा शतक्रत उद् वंशमिव येमिरे १

यत्सानोः सानुमारुहद्भूर्यस्पष्ट कर्त्वम् ।
तदिन्द्रो अर्थं चेतति यूथेन वृष्णिरेजति २

युक्ष्वा हि केशिना हरी वृषणा कक्ष्यप्रा ।
अथा न इन्द्र सोमपा गिरामुपश्रुतिं चर ३

एहि स्तोमाँ अभि स्वराभि गृणीह्या रुव ।
ब्रह्म च नो वसो सचेन्द्र यज्ञं च वर्धय ४

(उक्थं) नित्यवृद्धत्वतो विष्णोर्वर्धनं तु प्रकाशनम् । बहुशत्रून्निषिदसौ
हरिर्दनुजघातकः । अस्मत्सख्याय शब्दं च चकारास्मासु संस्थितः ।
यथा सुतेषु सोमेषु करोत्यृत्विक्षु च स्थितः ॥ ५ ॥ (तमित्) तमेव
शरणं नित्यं सखित्वाद्यर्थमीमहे । शक्त्यानन्दस्वरूपत्वाच्छक्रः सर्वत्र
चाशकत् । अस्माकं च सदा वित्तं दददेव प्रवर्तते ॥ ६ ॥ १९ ॥
(सुविवृतं) विस्पष्टं सुष्ठुकाल्यं च यशस्त्वद्दत्तमेव हि । गूढं ज्ञानसमूहं
त्वं विवृण्वृद्धिं च नः कुरु ॥ अद्रिरादरणीयत्वात्प्राणस्तद्वर्तकोऽद्रिवाः ।
हरिः शक्रस्तथाद्रीणां छेदनाद्वारणादपि ॥ ७ ॥ (नहित्वा) न
त्वामृघायमाणं हि वर्धमानं तु रोदसी । संप्राप्नुतः श्रीभूमी च संहिते
वाऽप्रसादतः । अपः प्रजाः सुखवतीरजयस्त्वद्वशत्वतः । ज्ञानानि
संधूनुहि च प्रापयोच्चा अपि स्वयम् ॥ ८ ॥ (आश्रुत्) बहुश्रवण-
कर्णास्मदाह्वानं शृणु चादरात् । अद्यैव च गिरो धेहि मयि स्तोमं च
मत्कृतम् । प्रियं योगादपि कुरु ॥ ९ ॥ (विद्माहि) विद्म त्वां

उक्थमिन्द्राय शंस्यं वर्धनं पुरुनिष्षिधे ।
शक्रो यथा सुतेषु णो रारणत्सख्येषु च ५
तमित्सखित्व ईमहे तं राये तं सुवीर्ये ।
स शक्र उत नः शकदिन्द्रो वसु दयमानः ॥ ६ ॥ १९ ॥
सुविवृतं सुनिरजमिन्द्र त्वादातमिद्यशः ।
गवामप व्रजं वृधि कृणुष्व राधो अद्रिवः ७
नहि त्वा रोदसी उभे ऋघायमाणमिन्वतः ।
जेषः स्वर्वतीरपः सं गा अस्मभ्यं धूनुहि ८
आश्रुत्कर्ण श्रुधी हवं नू चिद्दधिष्व मे गिरः ।
इन्द्र स्तोममिमं मम कृष्वा युजश्चिदन्तरम् ९
विद्मा हि त्वा वृषन्तमं वाजेषु हवनश्रुतम् ।
वृषन्तमस्य हूमह ऊतिं सहस्रसातमाम् १०



क्तिमत्तमम् । श्रोतारं युत्सु चाह्वानमाह्वयामस्तवावनम् । बहु-
लाभोत्तममिति ॥ १० ॥ स्थानान्तरगते ऋचौ । दृष्ट्वेन्द्रं यज्ञगं
पाभ्यां मधुच्छन्दाः समस्तुवत् । आ तू न इति तेनैव न विरुद्धा
तर्चिता ॥ छ ॥ (आतूनः) मात्रा कुशैर्गृहीतत्वाज्जन्मन्यासीत्स
कौशिकः । गाधित्वाद्वा हिरण्याण्डकोशस्थत्वाद्धरिस्तथा । मन्दसानो
नित्यसुखी स्तुत्यमायुश्च नस्तिर । ऋषिं सहस्रलाभं मां कुरु च ॥
॥ ११ ॥ (परित्वा) त्वा इमा गिरः । सर्वदा परितः सन्तु मदीयाः
सर्वलाभिनम् । वृद्धिरूपा गिरो जुष्टाः सेवारूपाश्च सन्तु नः ॥
॥ १२ ॥ २० ॥ १० ॥

अष्टावृचः पुनस्तेन दृष्टा अन्यत्रगास्तपः । कुर्वता ॥ छ ॥
(इन्द्रंविश्वा) सम्यगुद्रिक्तगुणव्यक्तिस्तथाभिधः ॥१॥ (सख्येते ॥२॥
पूर्वीरिन्द्रस्य) प्रथमानि महत्त्वेन ते दानान्यवनानि च । न भिद्यन्ते
न नश्यन्ति गोमदन्नं यशस्तथा । यदि मंहते ददातीशो ॥ ३ ॥

आ तू न इन्द्र कौशिक मन्दसानः सुतं पिब ।
नव्यमायुः प्र सू तिर कृधी सहस्रसामृषिम् ११
परि त्वा गिर्वणो गिर इमा भवन्तु विश्वतः ।
वृद्धायुमनु वृद्धयो जुष्टा भवन्तु जुष्टयः ॥ १२ ॥ २० ॥ १० ॥

जेता माधुच्छन्दसः । इन्द्रः । अनुष्टुप् ।

इन्द्रं विश्वा अवीवृधन्त्समुद्रव्यचसं गिरः ।
रथीतमं रथीनां वाजानां सत्पतिं पतिम् १
सख्ये त इन्द्र वाजिनो मा भेम शवसस्पते ।
त्वामभि प्र णोनुमो जेतारमपराजितम् २
पूर्वीरिन्द्रस्य रातयो न वि दस्यन्त्यूतयः ।
यदी वाजस्य गोमतः स्तोतृभ्यो मंहते मघम् ३

(पुरांभिन्दुः ॥ ४ ॥ त्वंवलस्य) वलस्तिर्यग्गतिर्धियः । वाचामन्यार्थबुद्धेस्तु बिलं मूलं तमो हि यत् । तदपावृतवांस्त्वं च प्रदर्श्य विनिवार्य च । त्वां हि देवा भयापेताः प्रेर्यमाणास्त्वयैव च । छाद्यमानं गिरा दैत्यैररक्षन्निव सद्गिरा ॥ छ ॥ इन्द्रस्य गोसवार्थे च समुत्सृष्टा जगत्यपि । चर्तुं गावो हृता दैत्यैः सरमारक्षिताः पुरा । तस्याः स्वसृत्वमुक्त्वैव तयोच्छिष्टं च गोपयः । तदर्थं पणयो नाम ते दैत्या बलपूर्वकाः । इन्द्रेण निहताः पश्चाज्ज्ञात्वा च सरमाकृतम् । ताडयित्वा पदा वक्रात्सृते पयसि तां भयात् । शरणागतां प्रेषयित्वा दूत्येन पणिनां पुनः । भित्वा गिरिव्रजं तं च गावो यत्र प्रतिष्ठिताः । निःसारिताः पुनस्ताश्च गोसवेनेष्टमेव च । तदा देवा अभीत्यैव परितो जुगुपुः पतिम् ॥ ५ ॥ (तवाहं) तवदानैरहं सिन्धुं नदीं प्रत्यागमं पुनः । त्वामावदन्स्तुतिपदैर्यज्ञदीक्षार्थमुद्यताः । उपातिष्ठन्त कर्तारो विधुस्त्वां ये गिरोदित ॥ ६ ॥ (मायाभिः) शक्तिभिः शक्तिमन्तं त्वां शोषकं वृत्रमातिरः । तमो वा त्वां विदुर्मेधारतास्तेषां श्रवांसि च । विद्या उच्चैस्तरां देहि ॥ ७ ॥ (इन्द्रमीशानं) स्तुवन्ति त्वां सहौजसा ॥ ८ ॥ २१ ॥ ११ ॥ ३ ॥ छ ॥

---

पुरां भिन्दुर्युवा कविरमितौजा अजायत ।
इन्द्रो विश्वस्य कर्मणो धर्ता वज्री पुरुष्टुतः ४
त्वं वलस्य गोमतो ऽपावरद्रिवो बिलम् ।
त्वां देवा अबिभ्युषस्तुज्यमानास आविषुः ५
तवाहं शूर रातिभिः प्रत्यायं सिन्धुमावदन् ।
उपातिष्ठन्त गिर्वणो विदुष्टे तस्य कारवः ६
मायाभिरिन्द्र मायिनं त्वं शुष्णमवातिरः ।
विदुष्टे तस्य मेधिरास्तेषां श्रवांस्युत्तिर ७
इन्द्रमीशानमोजसाभि स्तोमा अनूषत ।
सहस्रं यस्य रातय उत वा सन्ति भूयसीः ॥८॥२१॥११॥३॥



ऋक्संहितायाः स्वाध्यायात्प्रबन्धाद्व्यासनिर्मितात् । ब्राह्मणेभ्यस्तथा मानात्प्रोक्ताः स्युर्मुनयोऽत्र ये । श्रुत्यभावादलिङ्गाच्च मुनिर्नान्यः प्रतीयते । श्रुतिलिङ्गान्यता यावत्तावत्पूर्वा प्रमा भवेत् ॥ छ ॥ तर्ग्भिरुत्तराभिस्तु वह्निनामानमच्युतम् । अस्तौन्मेधातिथिस्ताभ्य उत्तरा अपि तद्दृशः । अन्यत्रगास्तपश्यन्स ता ददर्श कदाचन । कालस्थानान्तरत्वं चेत्सङ्ख्यातोऽभ्यधिकं भवेत् । अन्यस्थानगता अन्यदृष्टा अप्यत्रगा यदि । सङ्ख्यान्तर्भावमेष्यन्ति ता इतोपगता यतः ॥ छ ॥ (अग्निंदूतं) यज्ञभागार्थमत्रस्थो देवैः संप्रेषितो यतः । दूतोऽग्निर्वासुदेवश्च तत्तत्प्रार्थितकृद्यतः । विश्ववेदाः स सर्वज्ञो यज्ञज्ञो यज्ञसुक्रतुः ॥१॥ (अग्निं) अग्निनामा जामदग्न्यो भगवान्संप्रकीर्तितः । तस्य रूपबहुत्वेन वीप्सा चैवोपपद्यते । हवीमभिर्ऋगाह्वानैराह्वयन्तः प्रजापतिम् ॥ २ ॥ (अग्नेदेवान्) जज्ञानो व्यज्यमानस्तु वृक्तं प्रस्तुतमुच्यते । यजमानो वृक्तबर्हि-॥ ३ ॥ (तान्) बोधयेशेच्छतः सुरान् । देवैः सहोपविशसि ॥ ४ ॥ (घृताहवन) यस्य ते सुघृतं हविः । रिषतो नाशकात्रक्षो जनान्प्रति दहैव च ॥५॥ (अग्निनाग्निः) यस्यास्ये हूयते सोऽग्निः परेशेन समिध्यते । अथवाऽऽहवनीयोऽग्नि-

---

मेधातिथिः काण्वः । अग्निः, ६ प्रथमपादस्य
[निर्मथ्याहवनीयौ] अग्नी । गायत्री ।

अग्निं दूतं वृणीमहे होतारं विश्ववेदसम् । अस्य यज्ञस्य सुक्रतुम् १
अग्निमग्निं हवीमभिः सदा हवन्त विश्पतिम् । हव्यवाहं पुरुप्रियम् २
अग्ने देवाँ इहा वह जज्ञानो वृक्तबर्हिषे । असि होता न ईड्यः ३
ताँ उशतो वि बोधय यदग्ने यासि दूत्यम् । देवैरा सत्सि बर्हिषि ४
घृताहवन दीदिवः प्रति ष्म रिषतो दह । अग्ने त्वं रक्षस्विनः ५
अग्निनाग्निः समिध्यते कविर्गृहपतिर्युवा । हव्यवाड् जुह्वास्यः ॥६॥२२॥

मथितेन समिध्यते ॥ ६ ॥ २२ ॥ (कविमग्निं) सत्यधर्मा सद्गुण-
भृद्दुःखघ्नोऽमीवचातनः । चातनं कालनं वा स्यात् ॥ ७ ॥
(यस्त्वामग्ने ॥ ८ ॥ योअग्निं) देववीतिस्तु तद्गतिः । आवासयति
यस्त्वां च तं त्वं मृळय सर्वदा ॥ ९ ॥ (सनःपावक) त्वत्पूजाविषये
देवानावहेन्द्रियमानिनः ॥ १० ॥ (सनस्तवानः) गायत्रेण स्तूयमानो
दृश्यमानेन नो रयिम् । पुत्रयुक्तामिषं चैव वीर्ययुक्तामथावह ॥ ११ ॥
(अग्नेशुक्रेण) ज्वलता तेजसा विश्वदेवाह्वानैर्वृणु स्तुतिम् ॥ १२ ॥
॥ २३ ॥ १२ ॥

(सुसमिद्धः) अस्मद्धविष्मते देवानाहूय यज चादरात् ॥ १ ॥
(मधुमन्तं) तनूभ्यो वाक्ततो देवो व्यक्तस्तेन तनूनपात् ॥ २ ॥
(नराशंसं) नरैः स्तुत्यो नराशंसो वह्नेरन्याऽथवा तनूः ॥ ३ ॥

---

कविमग्निमुप स्तुहि सत्यधर्माणमध्वरे । देवममीवचातनम् ७
यस्त्वामग्ने हविष्पतिर्दूतं देव सपर्यति । तस्य स्म प्राविता भव ८
यो अग्निं देववीतये हविष्माँ आविवासति । तस्मै पावक मृळय ९
स नः पावक दीदिवोऽग्ने देवाँ इहा वह । उप यज्ञं हविश्च नः १०
स नः स्तवान आ भर गायत्रेण नवीयसा । रयिं वीरवतीमिषम् ११
अग्ने शुक्रेण शोचिषा विश्वाभिर्देवहूतिभिः । इमं स्तोमं जुषस्व नः
॥ १२ ॥ २३ ॥ १२ ॥

मेधातिथिः काण्वः । (आप्रीसूक्तं, अग्निरूपा देवताः=) १ इध्मः,
समिद्धोऽग्निर्वा, २ तनूनपात्, ३ नराशंसः, ४ इळः, ५ बर्हिः,
६ देवीर्द्वारः, ७ उषासानक्ता, ८ दैव्यौ होतारौ प्रचेतसौ,
९ तिस्रो देव्यः सरस्वतीळाभारत्यः, १० त्वष्टा,
११ वनस्पतिः, १२ स्वाहाकृतयः । गायत्री ।

सुसमिद्धो न आ वह देवाँ अग्ने हविष्मते । होतः पावक यक्षि च १
मधुमन्तं तनूनपाद्यज्ञं देवेषु नः कवे । अद्या कृणुहि वीतये २
नराशंसमिह प्रियमस्मिन् यज्ञ उप ह्वये । मधुजिह्वं हविष्कृतम् ३



(अग्नेसुखतमे) मनूनां च हितत्वेन मनुर्हित इतीरितः ॥ ४ ॥
(स्तृणीत) आनुषक्सर्वतो देवस्थानं बर्हिः स्तृणीत च । शुद्धस्य
विष्णोर्यत्स्थानं घृतपृष्ठं हि तन्मनः । यत्र स्याद्दर्शनं विष्णोर्नित्या-
मरणधर्मिणः ॥ ५ ॥ (विश्रयन्तां) ऋतरूपेण हरिणा समृद्धा या
ऋतावृधः । द्वारो देव्यः श्रियो दास्यः श्रयन्तामिह नो मखे ।
मानसे बाह्ययज्ञे वा ह्यसङ्गत्वादसश्चतः । अद्याहनि तथा नूनमद्यैव
यजनार्थतः । द्वारभूतः स भगवानपि साक्षान्मुमुक्षतः । स्त्रीरूपश्च
स ॥ ६ ॥ २४ ॥ (नक्तोषासा) नक्ता स्यान्नाक्तो यस्मात्स सर्वतः ।
उषाः प्रकाशरूपत्वात्सुभद्रे ते उपह्वये । अस्मिन्बर्हिषि संस्थित्यै ॥ ७ ॥
(तासुजिह्वा) होतारौ देवगावपि । मथ्यमानो परश्चैव वह्नी तद्रोऽथवा
हरिः । आत्माऽन्तरात्मरूपेण द्विरूपो वा व्यवस्थितः । देवेषु यजतां
यज्ञमस्मदीयमिमं सदा ॥ ८ ॥ (इळा) इळेड्यत्वाद्धरिः श्रीर्वा भूरूपा
सैव चापरा । मही तु भारतीनाम वायव्या ब्रह्मणोऽपरा । तद्गत-
तादृशै रूपैः पृथक्स्थो वा हरिस्तथा ॥ ९ ॥ (इहत्वष्टारं) त्वष्टा
तेजस्त्वतो विष्णुर्बलत्वाद्वा समीरितः । विश्वरूपकरत्वाच्च विश्वरूपोऽथ
कीर्तितः ॥ १० ॥ (अवसृजा) वननीयपतित्वेन वनस्पतिरितीरितः ।

---

अग्ने सुखतमे रथे देवाँ ईळित आ वह । असि होता मनुर्हितः ४
स्तृणीत बर्हिरानुषग् घृतपृष्ठं मनीषिणः । यत्रामृतस्य चक्षणम् ५
वि श्रयन्तामृतावृधो द्वारो देवीरसश्चतः । अद्या नूनं च यष्टवे
॥ ६ ॥ २४ ॥
नक्तोषासा सुपेशसाऽस्मिन् यज्ञ उप ह्वये । इदं नो बर्हिरासदे ७
ता सुजिह्वा उप ह्वये होतारा दैव्या कवी । यज्ञं नो यक्षतामिमम् ८
इळा सरस्वती मही तिस्रो देवीर्मयोभुवः । बर्हिः सीदन्त्वस्रिधः ९
इह त्वष्टारमग्रियं विश्वरूपमुप ह्वये । अस्माकमस्तु केवलः १०
अव सृजा वनस्पते देव देवेभ्यो हविः । प्र दातुरस्तु चेतनम् ११

ज्ञानं तु चेतनम् ॥ ११ ॥ (स्वाहा) स्वाहा स्वभागगतिमान्स्मृतः । अव्ययत्वादमोषश्च ॥ १२ ॥ २५ ॥ १३ ॥

(ऐभिरग्ने) कामदोहादुवः स्मृताः ॥ १ ॥ (आत्वा ॥ २ ॥ इन्द्रवायू) बृहन्पतिर्बृहत्या वा वाच एव बृहस्पतिः । मित्रेति मित्रावरुणौ पूषानाम स पोषणात् । पूर्णत्वाद्वा भगः प्रोक्तः पूर्णैश्वर्यादिकत्वतः । आदिस्थत्वात्स आदित्य आददानः प्रयाति वा । बहुरूपत्वतश्चैव मानोक्तत्वात्तु मारुतः ॥ ३ ॥ (प्रवः) मत्सरा मदकारित्वात्ताच्छील्यादुत्तरं पदम् । द्रप्सास्ते द्रवणाच्चैव चमसस्थाश्चमूषदः । शिरश्च चमसं प्रोक्तमिष्टदानात्तथेन्दवः ॥ ४ ॥ (ईळतेत्वां) अवस्युर्यजमानः स्यादवनार्थप्रवृत्तितः । आत्मस्थं वा बहुवचो बहवो मुनयोऽत्र वा । उत्तराणां वचस्त्वेन स्वयं वदति चेश्वरः । अरंकृतोऽतिकर्तारस्त्वलङ्कर्तार एव वा ॥ ५ ॥ (घृतपृष्ठाः) स्निग्धपृष्ठास्समारूढा हरिणा वा विदोषिणा । मनोमात्रेण योज्याश्च त्वां

---

स्वाहा यज्ञं कृणोतनेन्द्राय यज्वनो गृहे । तत्र देवाँ उप ह्वये
॥ १२ ॥ २५ ॥ १३ ॥

मेधातिथिः काण्वः । विश्वे देवाः (विश्वैर्देवैः सहितोऽग्निः),
३ इन्द्रवायुबृहस्पतिमित्राग्निपूषभगादित्यमरुद्गणाः,
१० विश्वदेवाग्नीन्द्रवायुमित्रधामानि, ११ अग्निः । गायत्री ।

ऐभिरग्ने दुवो गिरो विश्वेभिः सोमपीतये । देवेभिर्याहि यक्षि च १
आ त्वा कण्वा अहूषत गृणन्ति विप्र ते धियः । देवेभिरग्न आ गहि २
इन्द्रवायू बृहस्पतिं मित्राग्निं पूषणं भगम् । आदित्यान् मारुतं गणम् ३
प्र वो भ्रियन्त इन्दवो मत्सरा मादयिष्णवः । द्रप्सा मध्वश्चमूषदः ४
ईळते त्वामवस्यवः कण्वासो वृक्तबर्हिषः । हविष्मन्तो अरंकृतः ५
घृतपृष्ठा मनोयुजो ये त्वा वहन्ति वह्नयः । आ देवान्त्सोमपीतये
॥ ६ ॥ २६ ॥



देवांश्च वहन्ति ये ॥ ६ ॥ २६ ॥ (तान्यजत्रात्) तैर्देवान्यजतः होतॄन्ज्ञानेन ब्रह्मणैधितान् । पत्नीभिर्योजयागन्तुं सह मध्वश्च पायय ॥ ७ ॥ (येयजत्राः) ते षष्ठ्यतोऽनुदात्तः स्यादुदात्तो बहुवाचकः । आवृत्तस्तु भवेदर्थस्ते पिबन्तु वषट्कृतौ ॥ ८ ॥ (आकींसूर्यस्य) सूर्यस्य रोचनात्स्वर्गादावक्षत्यग्निरिन्दुपान् । उषः प्रकाशनाद्ब्रह्म तद्विदस्त उषर्बुधः ॥ ९ ॥ (विश्वेभिः) देवास्ते विष्णुधामत्वान्मित्रधामान ईरिताः ॥ १० ॥ (त्वंहोता ॥ ११ ॥ युक्ष्व) अग्निवाहा अश्वतर्यो दूर्वापद्माग्निसप्रभाः । लोहिताः क्वचिदश्वाश्च रोहिन्मृग्योऽपि कुत्रचित् ॥ १२ ॥ २७ ॥ १४ ॥

(इन्द्रसोमं ॥ मरुतः ॥ अभियज्ञं ) ऋतुर्मार्गस्तु नेतृत्वान्नेष्टाऽग्निर्हरिरेव वा । ईष्टे न कश्चिदस्येति ग्ना नद्यश्च समीरिताः । गति-

---

तान् यजत्राँ ऋतावृधो ऽग्ने पत्नीवतस्कृधि । मध्वः सुजिह्व पायय ७
ये यजत्रा य ईड्यास्ते ते पिबन्तु जिह्वया । मधोरग्ने वषट्कृति ८
आकीं सूर्यस्य रोचनाद्विश्वान्देवाँ उषर्बुधः । विप्रो होतेह वक्षति ९
विश्वेभिः सोम्यं मध्वग्न इन्द्रेण वायुना । पिबा मित्रस्य धामभिः १०
त्वं होता मनुर्हितो ऽग्ने यज्ञेषु सीदसि । सेमं नो अध्वरं यज ११
युक्ष्वा ह्यरुषी रथे हरितो देव रोहितः । ताभिर्देवाँ इहा वह
॥ १२ ॥ २७ ॥ १४ ॥

मेधातिथिः काण्वः । [प्रतिदैवतं ऋतुसहितम्– ] १ इन्द्रः,
२ मरुतः, ३ त्वष्टा, ४ अग्निः, ५ इन्द्रः, ६ मित्रावरुणौ,
७-१० द्रविणोदाः, ११ अश्विनौ, १२ अग्निः । गायत्री ।

इन्द्र सोमं पिब ऋतुना ऽऽ त्वा विशन्त्विन्दवः ।
मत्सरासस्तदोकसः १

शीलत्वतो ग्रास्ता ज्ञातृनेतृत्वतो हरिः । गमनान्नयनाद्वा ग्रा ऋतुपात्रमृतुस्तथा । सोमास्तदोकसः प्रोक्ता ऋतुपात्रस्थिता यतः । पत्नीनेतृत्वतो नेष्टा नेष्टर्त्विक्संप्रकीर्तितः । ज्ञापयन्ति स्वलिङ्गानीत्यृतवः सम्प्रकीर्तिताः । पावनाच्चैव पोतारो मरुतः पोतृदेवताः । अग्निस्तु देवता नेष्टुस्त्वष्टेन्द्रो विष्णुरेव वा ॥ १ ॥ २ ॥ ३ ॥ (अग्नेदेवान्) वेद्युत्तरा सदश्चैव प्राग्वंशो योनयः स्मृताः । भूष भूषय नो यज्ञं ॥४॥ (ब्राह्मणात्) ब्राह्मणाच्छंसिपात्रतः । पिबेन्द्र नो राधसोऽर्थं त्वामनुत्वृतुदेवताः । स्तृतं छिन्नमिति प्रोक्त ॥ ५ ॥ (युवंदक्षं) मस्तभ्यं दुर्दभं स्मृतम् । दक्षाख्यं यजमानं चापीशाथे यज्ञमेव च । सोमं पीत्वर्तुपात्रेण सहवातेन चर्तुना ॥ ६ ॥ २८ ॥ (द्रविणोदाः) होता च होतृकाश्चैव द्रविणोदा द्रवीणसः । अग्निश्चैवाग्नयस्तेषां देवता विष्णुमीळते ॥ ७ ॥ (द्रविणोदाददातु ॥ ८ ॥ द्रविणोदाःपिपीषति) पातुमिच्छति सोमं स सोमास्तस्मै प्रतिष्ठिताः । ऋतुपात्रैर्देवताभिः सहैवैनमभीप्सत ॥ ९ ॥ (यत्त्वा) चतुर्थवारमपि यत्त्वां यजामो ददिर्भव ॥ १० ॥ (अश्विना) दीद्यग्नी इति दीप्ताग्नी ॥ ११ ॥

---

मरुतः पिबत ऋतुना पोत्राद्यज्ञं पुनीतन । यूयं हि ष्ठा सुदानवः २
अभि यज्ञं गृणीहि नो ग्नावो नेष्टः पिब ऋतुना । त्वं हि रत्नधा असि ३
अग्ने देवाँ इहा वह सादया योनिषु त्रिषु । परि भूष पिब ऋतुना ४
ब्राह्मणादिन्द्र राधसः पिबा सोममृतूँरनु । तवेद्धि सख्यमस्तृतम् ५
युवं दक्षं धृतव्रत मित्रावरुण दूळभम् । ऋतुना यज्ञमाशाथे ॥६॥२८॥
द्रविणोदा द्रविणसो ग्रावहस्तासो अध्वरे । यज्ञेषु देवमीळते ७
द्रविणोदा ददातु नो वसूनि यानि शृण्विरे । देवेषु ता वनामहे ८
द्रविणोदाः पिपीषति जुहोत प्र च तिष्ठत । नेष्ट्रादृतुभिरिष्यत ९
यत् त्वा तुरीयमृतुभिर्द्रविणोदो यजामहे । अध स्मा नो ददिर्भव १०
अश्विना पिबतं मधु दीद्यग्नी शुचिव्रता । ऋतुना यज्ञवाहसा ११



(गार्हपत्येन) संत्योऽग्निः सन्ततत्वतः । विष्णुर्वर्त्वधिपो विष्णुः केशवादिस्वरूपतः । ग्रहान्सोमस्य मिमत इति तस्यैव कथ्यते । गार्हपत्येन पात्रेण यजमानस्तु देवयन् । देवान्पातीति ॥ १२ ॥ ॥ २९ ॥ १५ ॥

(आत्वा) सुष्ठूरीकुर्वन्ति विषयान्यतः । चक्षूंषीन्द्रस्य हरयस्तेनोक्ताः सूरचक्षसः ॥ १ ॥ (इमाः) भक्तिस्नुतानि धानानि बुद्धेर्धाना इति ह्यपि ॥ २ ॥ (इन्द्रं) प्रातरित्यादिवाक्येन सवनत्रयमीरितम् । समाप्तत्वात्सोमपीतिस्तृतीयं सवनं स्मृतम् । सदा ॥३॥ (उपनः ॥ ४ ॥ सेमं ॥ ५ ॥ ३० ॥ इमेसोमासः) विष्णुविवक्षायां यजमानबलं सहः । तदिष्टस्यैव दानाय तद्गुणव्यक्तिरेव वा । 'पूर्णमदः पूर्णमिदं पूर्णात्पूर्णमुदच्यते' । 'हेयोपादेयरहितगुणपूर्णो हरिः सदा' । 'अनुग्रहव्यक्तिरेव तद्गुणानां च नान्यथा' । इत्यादिवेदवाक्येभ्यो नैव

---

गार्हपत्येन सन्त्य ऋतुना यज्ञनीरसि । देवान् देवयते यज
॥ १२ ॥ २९ ॥ १५ ॥

मेधातिथिः काण्वः । इन्द्रः । गायत्री ।

आ त्वा वहन्तु हरयो वृषणं सोमपीतये । इन्द्र त्वा सूरचक्षसः १
इमा धाना घृतस्नुवो हरी इहोप वक्षतः । इन्द्रं सुखतमे रथे २
इन्द्रं प्रातर्हवामह इन्द्रं प्रयत्यध्वरे । इन्द्रं सोमस्य पीतये ३
उप नः सुतमा गहि हरिभिरिन्द्र केशिभिः । सुते हि त्वा हवामहे ४
सेमं नः स्तोममा गह्युपेदं सवनं सुतम् । गौरो न तृषितः पिब ॥५॥३०॥
इमे सोमास इन्दवः सुतासो अधि बर्हिषि । ताँ इन्द्र सहसे पिब ६

वृद्धिर्हरेः क्वचित् ॥ ६ ॥ (अयन्ते ॥ ७ ॥ विश्वमित् ॥ ८ ॥ सेमं)
पृण संपूरय स्वाध्यः सुधीतय इतीरिताः ॥ ९ ॥ ३१ ॥ १६ ॥

(इन्द्रावरुणयोः) अविकारेण संस्थानमीदृक्त्वं नाम कीर्तितम् ॥
॥ १ ॥ (गन्तारा) मावतो ज्ञानयुक्तस्य प्रजाश्चर्षणयः स्मृताः ॥ २ ॥
(अनुकामं) नेदिष्ठत्वं समीपत्वं क्षिप्रं शरणमीमहे ॥ ३ ॥ (युवाकु)
युवयोरेव वाक्यानां सुमतीनां च सर्वशः । भवेमान्नप्रदातॄणां सर्वदा
विषया वयम् ॥ ४ ॥ (इन्द्रः) क्रतुः प्रधान उक्थ्यश्च शब्दैः स्तुत्यो
विशेषतः ॥ ५ ॥ ३२ ॥ (तयोरित्) रक्षणेन तयोर्वित्तं ज्ञानं वा
प्राप्नुमः सदा । निधीमहि च दानं च स्यादेवास्माकमर्थिने ॥ ६ ॥
(इन्द्रावरुण) ह्रस्वता संहितायां तु देवतैक्यप्रदर्शिनी । स्वरूपैक्यं
हरौ तत्तु मत्यैक्यं भिन्नयोरपि ॥ ७ ॥ (इन्द्रावरुणनु) अच वां

अयं ते स्तोमो अग्रियो हृदिस्पृगस्तु शंतमः । अथा सोमं सुतं पिब ७
विश्वमित्सवनं सुतमिन्द्रो मदाय गच्छति । वृत्रहा सोमपीतये ८
सेमं नः काममा पृण गोभिरश्वैः शतक्रतो । स्तवाम त्वा स्वाध्यः
॥ ९ ॥ ३१ ॥ १६ ॥

मेधातिथिः काण्वः । इन्द्रावरुणौ । गायत्री, ४-५ पादनिचृत्
(५ ह्रसीयसी वा) गायत्री ।

इन्द्रावरुणयोरहं सम्राजोरव आ वृणे । ता नो मृळात ईदृशे १
गन्तारा हि स्थोऽवसे हवं विप्रस्य मावतः । धर्तारा चर्षणीनाम् २
अनुकामं तर्पयेथामिन्द्रावरुण राय आ । ता वां नेदिष्ठमीमहे ३
युवाकु हि शचीनां युवाकु सुमतीनाम् । भूयाम वाजदाव्नाम् ४
इन्द्रः सहस्रदाव्नां वरुणः शंस्यानाम् । क्रतुर्भवत्युक्थ्यः ॥ ५ ॥ ३२ ॥
तयोरिदवसा वयं सनेम नि च धीमहि । स्यादुत प्ररेचनम् ६
इन्द्रावरुण वामहं हुवे चित्राय राधसे । अस्मान्त्सु जिग्युषस्कृतम् ७
इन्द्रावरुण नू नु वां सिषासन्तीषु धीष्वा । अस्मभ्यं शर्म यच्छतम् ८





नुमो लोपः स्वातन्त्र्यार्थे हि सूत्रतः । साधयन्तीषु धीष्वेव
शर्मास्मभ्यं प्रयच्छतम् ॥ ८ ॥ (प्रवां) यथास्थितस्तुतिं यां च
र्पयेथे सदैव मे ॥ ९ ॥ ३३ ॥ १७ ॥ ४ ॥

(सोमानं) सौम्यं शब्दं कृणु त्वं नो विष्णो वायो सुवाक्पते ।
कक्षीवन्तं प्रति हि यो दत्तो यः स उशिक्सुतः । विवक्षितो मुनिः
सोऽपि तस्मादर्थोऽपि मां प्रति ॥ १ ॥ (योरेवान्) वित्तवान्रोगहा
ज्ञानवेत्तास्माभिः सयुग्भवेत् । तुरो वेगाद्धरिर्वायु-॥ २ ॥ (मानः)
ररुट् चातिरोषणात् । तस्य धूर्तिर्वचो नास्मान्पूरयेद्रक्ष नो हरे ॥३॥
(स घ) घेतिहाऽवधृतिश्चैव सोमः सौम्यत्वतो हरिः । उना मया च
युक्तत्वादूमैर्युक्तत्वतोऽपि वा । अभः स इति वा ॥ ४ ॥ (त्वन्तं)
साक्षाच्छ्रीर्दक्षिणेति दक्षिणा । दक्षिणा चतुरत्वाद्वा स्वयमेव जनार्दनः॥
॥ ५ ॥ ३४ ॥ (सदसस्पतिं) सदसस्पतिर्हरिः साक्षाद्वायुरग्निरथापि

प्र वामश्नोतु सुष्टुतिरिन्द्रावरुण यां हुवे । यामृधाथे सधस्तुतिम्
॥ ९ ॥ ३३ ॥ १७ ॥ ४ ॥

मेधातिथिः काण्वः । १-३ ब्रह्मणस्पतिः, ४ इन्द्रो ब्रह्मणस्पतिः
सोमश्च, ५ ब्रह्मणस्पतिः सोम इन्द्रो दक्षिणा च,
६-८ सदसस्पतिः, ९ सदसस्पतिर्नराशंसो वा । गायत्री ।

सोमानं स्वरणं कृणुहि ब्रह्मणस्पते । कक्षीवन्तं य औशिजः १
यो रेवान्यो अमीवहा वसुवित् पुष्टिवर्धनः । स नः सिषक्तु यस्तुरः २
मा नः शंसो अररुषो धूर्तिः प्रणङ् मर्त्यस्य । रक्षा णो ब्रह्मणस्पते ३
स घा वीरो न रिष्यति यमिन्द्रो ब्रह्मणस्पतिः ।
सोमो हिनोति मर्त्यम् ४
त्वं तं ब्रह्मणस्पते सोम इन्द्रश्च मर्त्यम् । दक्षिणा पात्वंहसः ॥५॥३४॥
सदसस्पतिमद्भुतं प्रियमिन्द्रस्य काम्यम् । सनिं मेधामयासिषम् ६

वा । लाभज्ञानस्वरूपोऽसौ शरणं तमयासिषम् ॥ ६ ॥ (यस्मात्) धीप्रेरकः स ध्येयश्च धीभिर्योगं तदाप्नुते ॥ ७ ॥ (आत्) तस्मा-द्धविष्कृतस्त्वृद्धिं करोति यजतो विभुः । करोति चोत्तमं यज्ञ देवाह्वानानि गच्छति ॥ ८ ॥ (नराशंसं) नरैः स्तुत्यो नराशंसो हरिर्धृष्टतमश्च सः । गुणानां प्रथमाधिक्यात्सप्रथस्तम ईरितः । यस्य स्वर्गादपि गृहं मखः प्रियमिवेयते ॥ ९ ॥ ३५ ॥ १८ ॥

(प्रतित्यं) यज्ञं प्रतिप्रति त्यं तं सम्यक्शास्त्रोक्तलक्षणम् । आहूयसे ॥ १ ॥ (नहि) महान्नैव त्वदन्योऽस्ति क्रतुं प्रति । विष्णौ हि मुख्यतोऽर्थोऽयमग्नौ कांश्चिद्दते सुरान् ॥ २ ॥ (येमह) महतो रञ्जकात्स्वर्गादद्रोग्धारोऽखिलं विदुः ॥ ३ ॥ (यउग्राः) प्राप्ता अर्के विशेषेण सन्निधिस्तत्र यद्धरेः ॥ ४ ॥ (येशुभ्राः) शुद्धा घोरबलाः क्षेत्रत्रातारः क्षतितोऽपि वा । रम्यसत्सुखभोक्तारो मरुतो मारुत-त्वतः । एतादृशानि रूपाणि प्राणाग्निस्थानि चेशितुः । पृथग्वा

---

यस्मादृते न सिध्यति यज्ञो विपश्चितश्चन । स धीनां योगमिन्वति ७
आदृध्नोति हविष्कृतिं प्राञ्चं कृणोत्यध्वरम् । होत्रा देवेषु गच्छति ८
नराशंसं सुधृष्टममपश्यं सप्रथस्तमम् । दिवो न सद्ममखसम्
॥ ९ ॥ ३५ ॥ १८ ॥

मेधातिथिः काण्वः । अग्निर्मरुतश्च । गायत्री ।

प्रति त्यं चारुमध्वरं गोपीथाय प्र हूयसे । मरुद्भिरग्न आ गहि १
नहि देवो न मर्त्यो महस्तव क्रतुं परः । मरुद्भिरग्न आ गहि २
ये महो रजसो विदुर्विश्वे देवासो अद्रुहः । मरुद्भिरग्न आ गहि ३
य उग्रा अर्कमानृचुरनाधृष्टास ओजसा । मरुद्भिरग्न आ गहि ४



तादृशान्येव देवगान्यपि सर्वशः ॥ ५ ॥ ३६ ॥ (येनाकस्य) स्वर्गोपरि आकाशे च सूर्यादावासते सुराः । नाको निर्दुःखरूपत्वाद् द्यौः आकाशस्वरूपतः ॥ ६ ॥ (यईङ्खयन्ति) प्रतोलयन्ति च गिरींस्तिरस्कृत्य च सागरम् । पुरुषान्प्रकृतिं वापि पर्ववन्तो हि जन्मना । पुरुषाः समुद्रेकात्समुद्रः प्रकृतिर्मता । प्रकृतेः पुरुषाणां च प्रेरकः सन्सदा हरे । स्वरूपैर्बहुभिर्युक्त आयाहि समसद्गुणैः ॥ ७ ॥ (आये ॥ ८ ॥ अभित्वा) ॥ ९ ॥ ३७ ॥ १९ ॥ इति श्रीमदानन्दतीर्थभगवत्पादाचार्य-विरचिते श्रीमदृग्भाष्ये (प्रथमाष्टके) प्रथमोऽध्यायः ॥ १ ॥

---

ये शुभ्रा घोरवर्पसः सुक्षत्रासो रिशादसः । मरुद्भिरग्न आ गहि
॥ ५ ॥ ३६ ॥

ये नाकस्याधि रोचने दिवि देवास आसते । मरुद्भिरग्न आ गहि ६
य ईङ्खयन्ति पर्वतान् तिरः समुद्रमर्णवम् । मरुद्भिरग्न आ गहि ७
आ ये तन्वन्ति रश्मिभिस् तिरः समुद्रमोजसा । मरुद्भिरग्न आ गहि ८
अभि त्वा पूर्वपीतये सृजामि सोम्यं मधु । मरुद्भिरग्न आ गहि
॥ ९ ॥ ३७ ॥ १९ ॥

## ॥ अथ द्वितीयोऽध्यायः ॥

श्रीमद्धनुमद्भीममध्वान्तर्गतरामकृष्णवेदव्यासात्मकलक्ष्मी-हयग्रीवाय नमः ॥ ॐ ॥ (अयंदेवाय) सर्वजन्मकृते विष्णुदेवायेयं स्तुतिः कृता । मुखेन विप्रैः काण्वाद्यैः सैव यद्रतिधातमा ॥ १ ॥ (यइन्द्राय) वाङ्मात्रेणैव योज्यौ ये चक्रुरिन्द्राय वाजिनौ । शमीभिर्विष्णुनिष्ठाभिर्यज्ञभागं च लेभिरे । भगवांश्चैतदखिलं कृतवानृभुषु स्थितः । पृथग्वा फलदातृत्वात् ॥ २ ॥ (तक्षन्) परितो ज्मां यतश्चरेत् । परिज्माऽतो रथः काम्यं सबरित्यभिधीयते । ब कामन इति ह्यस्मा-॥ ३ ॥ (युवाना) त्सुधन्वैषां पिता स्मृतः । बृहस्पतेः कामधेनुमृजुभक्ता ऋजूयवः । अवेतनं स्वामिबलात्कर्म विष्टचत्र तेऽकृत । ऋतभूमिर्ज्ञानभूमिर्भगवानृभुरीरितः । येषां भूतमृतं कर्म यज्ञभागाश्रितोऽपि ते ॥ ४ ॥ (संवः) सहेन्द्रेण सहादित्यैः प्राप्ता युष्माकमिन्दवः ॥ ५ ॥ १ ॥ (उतत्यं) एकं चमसं चतुरः कुरुतेत्याह तान्पुरा । त्वष्टाग्निश्चैव देवानां वाक्यात्तदपि तैः कृतम् ।

---

॥ अथ द्वितीयोऽध्यायः ॥

मेधातिथिः काण्वः । ऋभवः । गायत्री ।

अयं देवाय जन्मने स्तोमो विप्रेभिरासया । अकारि रत्नधातमः १
य इन्द्राय वचोयुजा ततक्षुर्मनसा हरी । शमीभिर्यज्ञमाशत २
तक्षन्नासत्याभ्यां परिज्मानं सुखं रथम् । तक्षन् धेनुं सबर्दुघाम् ३
युवाना पितरा पुनः सत्यमन्त्रा ऋजूयवः । ऋभवो विष्ट्यक्रत ४
सं वो मदासो अग्मतेन्द्रेण च मरुत्वता । आदित्येभिश्च राजभिः
॥ ५ ॥ १ ॥
उत त्यं चमसं नवं त्वष्टुर्देवस्य निष्कृतम् । अकर्त चतुरः पुनः ६



यादि स्वोक्तंपरित्यज्य त्वष्टुः शुश्रूषणं कृतम् । तं पूर्वकृतमेवैकं चमसं चतुरोऽकृत ॥ ६ ॥ (तेनः) सप्तसङ्ख्यानि रत्नानि त्रिकालेष्वपि धत्तन । पुराणपञ्चरात्रेतिहासवेदान्हरिस्तथा । मीमांसातर्कसहितान्पञ्च वेदानथापि वा । सप्तच्छन्दांसि वैकैकं तद्गुणैरखिलैः सह ॥ ७ ॥ (अधारयन्त) सुकर्मणा यज्ञभागमभजन्नप्यधारयन् । वह्नयो धारकत्वेन स्थिरत्वेन यथागतिः ॥ ८ ॥ २ ॥ १ ॥ (२०) ॥

(इहेन्द्राग्नी) ह्वये सोमं प्रति च तौ ॥ १ ॥ (तायज्ञेषु) शुम्भनं भूषणं मतम् ॥ २ ॥ (तामित्रस्य) तौ मित्रस्य प्रशस्त्यर्थौ हरेः ॥ ३ ॥ (उग्रासन्ता ॥ ४ ॥ तामहान्ता) रक्षांसि चोब्जतम् । रक्षोरक्ष्याः प्रजा यस्मादत्र्यो मार्गत्रयोज्झिताः । पितृदेवमनुष्याणां गत्यभावादधोगतेः ॥ ५ ॥ (तेनसत्येन) सत्येन गुणपूर्णेन विष्णुना तेन जागृतम् । स्वगुणैरेव विष्णुस्तु प्रकृष्टे चेतने हरौ । पदे गम्यत्वतः व्यक्तस्मिन्नेव स्वभावतः । तथास्थितौ तु जागृतमिति विष्णुविशेषतः । उक्तः ॥ ६ ॥ ३ ॥ २ ॥ (२१) ॥

---

ते नो रत्नानि धत्तन त्रिरा साप्तानि सुन्वते । एकमेकं सुशस्तिभिः ७
अधारयन्त वह्नयो ऽभजन्त सुकृत्यया । भागं देवेषु यज्ञियम्
॥ ८ ॥ २ ॥ १ ॥ २० ॥

मेधातिथिः काण्वः । इन्द्राग्नी । गायत्री ।

इहेन्द्राग्नी उप ह्वये तयोरित्स्तोममुश्मसि । ता सोमं सोमपातमा १
ता यज्ञेषु प्र शंसतेन्द्राग्नी शुम्भता नरः । ता गायत्रेषु गायत २
ता मित्रस्य प्रशस्तय इन्द्राग्नी ता हवामहे । सोमपा सोमपीतये ३
उग्रा सन्ता हवामह उपेदं सवनं सुतम् । इन्द्राग्नी एह गच्छताम् ४
ता महान्ता सदस्पती इन्द्राग्नी रक्ष उब्जतम् । अप्रजाः सन्त्वत्रिणः ५
तेन सत्येन जागृतमधि प्रचेतुने पदे । इन्द्राग्नी शर्म यच्छतम्
॥ ६ ॥ ३ ॥ २ ॥ २१ ॥

(प्रातर्युजा) प्रातः स्तुतत्वेन प्रोक्तौ प्रातर्युजाविति । अश्विनौ भगवांश्चैव प्रातर्योगेन गम्यते । स्तुतिशब्दः स्तुतौ यस्माद्बुध्यते वर्तमानकः । बोधयेत्यत उक्तं तत्परतो बुध्यते कथम् ॥ १ ॥ (यासुरथा ॥ २ ॥ यावां) कशया स्पृष्टिमात्रेण मधुरं कुरुतोऽखिलम् । अतो मिमिक्षतमिति स्पर्शो मेक्षणमुच्यते । वेदवाक्यस्तुतत्वेन कशा सा सूनृतावती । तयैव घृतसोमादि स्पृशतं याज्ञिकं वसु ॥ ३ ॥ (नहिवां ॥ ४ ॥ हिरण्यपाणिं) हितत्वाद्रमणीयत्वाद्धिरण्यं वर्णतोऽपि च । रूपं नारायणस्यैव पाणिशब्दोपलक्षितम् । स्रष्टृत्वात्सविता विष्णुः स ज्ञाता स्वपदादिकम् । स एव देवता मुख्या तद्गुणैक्येन देवता ॥ ५ ॥ ४ ॥ (अपांनपातं) व्यक्तत्वात्पार्थिवे देहे सोऽपांनपा जनार्दनः ॥ ६ ॥ (विभक्तारं) सदा विभज्य दातारं वसोरुत्तम-राधसः । अशेषपुण्यपापादिविशेषैश्चितिदर्शकम् । आह्वयामः ॥ ७ ॥

---

मेधातिथिः काण्वः । १-४ अश्विनौ ; ५-८ सविता ; ९-१० अग्निः ; ११ देव्यः ; १२ इन्द्राणीवरुणान्यग्नाय्यः ; १३-१४ द्यावापृथिव्यौ ; १५ पृथिवी ; १६ विष्णुर्देवा वा ; १७-२१ विष्णुः । गायत्री ।

प्रातर्युजा वि बोधयाश्विनावेह गच्छताम् । अस्य सोमस्य पीतये १

या सुरथा रथीतमोभा देवा दिविस्पृशा । अश्विना ता हवामहे २

या वां कशा मधुमत्यश्विना सूनृतावती । तया यज्ञं मिमिक्षतम् ३

नहि वामस्ति दूरके यत्रा रथेन गच्छथः । अश्विना सोमिनो गृहम् ४

हिरण्यपाणिमूतये सवितारमुप ह्वये । स चेत्ता देवता पदम् ॥ ५ ॥४॥

अपां नपातमवसे सवितारमुप स्तुहि । तस्य व्रतान्युश्मसि ६

विभक्तारं हवामहे वसोश्चित्रस्य राधसः । सवितारं नृचक्षसम् ७





(सखायः) स राधांसि शोभयत्यञ्जसा हरिः ॥८॥ (अग्नेपत्नीः ॥९॥ आग्ना) नदीश्च भारतीं चैव होत्रमाहुतिरूपतः । वरूत्रीं वरणीयत्वा-त्प्राणाद्बुद्धिस्वरूपिणीम् । विष्णुश्च प्राणसंबन्धाद्भारतीत्येव चोदितः । प्राणस्तु भरतो भारततत्वाद्भर्तृरूपतः । होत्राहुतत्वतो विष्णुः श्रीर्वापि धिषणा मता ॥ १० ॥ ५ ॥ (अभिनः) शर्म दत्वैव महतो विष्णो रक्षन्तु नोऽभितः । प्राणेनैवावसा साकं यस्मादविधवाः सदा । अतो अच्छिन्नपत्रास्ताः सदा युक्कर्णभूषणाः ॥ ११ ॥ (इहेन्द्राणीं ॥१२॥ महीद्यौः) भरणैर्नः पारयेतां दुःखेभ्यः श्रीश्च भूश्च ते । स्वयं वा भगवानन्ये रोदसी लोकदेवते ॥ १३ ॥ (तयोरित्) तयोः पथस्तु विज्ञानं घृतवत्सापरोक्षकम् । यल्लोकदेवताऽपि स्याद्भारती ज्ञानदेवता । विष्णोर्नित्यपदस्थं यज्ज्ञानं यद्घृतवत्पयः । लिहन्ति विप्रास्तज्ज्ञानं बुद्धिभिस्तत्प्रसादतः । गां धारयन्वर्तते यद्गन्धर्वस्तेन केशवः ॥१४॥

---

सखाय आ नि षीदत सविता स्तोम्यो नु नः ।
दाता राधांसि शुम्भति ८

अग्ने पत्नीरिहा वह देवानामुशतीरुप । त्वष्टारं सोमपीतये ९

आ ग्ना अग्न इहावसे होत्रां यविष्ठ भारतीम् ।
वरूत्रीं धिषणां वह ॥ १० ॥ ५ ॥

अभि नो देवीरवसा महः शर्मणा नृपत्नीः ।
अच्छिन्नपत्राः सचन्ताम् ११

इहेन्द्राणीमुप ह्वये वरुणानीं स्वस्तये । अग्नायीं सोमपीतये १२

मही द्यौः पृथिवी च न इमं यज्ञं मिमिक्षताम् ।
पिपृतां नो भरीमभिः १३

तयोरिद् घृतवत्पयो विप्रा रिहन्ति धीतिभिः ।
गन्धर्वस्य ध्रुवे पदे १४

(स्योनापृथिवि) स्योना सुखकरी स्यान्नो यतो नश्यसि नो नृवत् । निवेशनी साऽधारत्वाच्छर्म यच्छ महत्तरम् ॥ १५ ॥ ६ ॥ (अतोदेवाः) असुरेभ्यो जगद्धृत्वा यतो विष्णुस्त्रिविक्रमैः । आरभ्य पृथिवीं सप्तलोकैः सार्कं जगत्पतिः । चक्रे सुरान्पदस्थानप्यतो देवा अवन्तु नः । विशिष्टबलचेष्टत्वाद्विष्णुरित्यभिधा हरेः । प्राणं बलं पकारं च णकारं चाह हि श्रुतिः ॥ १६ ॥ (इदंविष्णुः) रमन्ति पांसवो यत्र पांसुरं पदमीरितम् । समूढं तत्र विश्वं हि पांसुवज्जगतः पतेः ॥१७॥ (त्रीणिपदा) वेदान्कालान्गुणाँल्लोकान्देवमानुषदानवान् । चेतनाचेतनान्मिश्रांस्त्रीणि पदा विचक्रमे । रक्षकत्वेन सर्वाणि स्रष्टृभर्तृत्वतस्तथा । मोक्षदत्वेन च विभुः स्तम्भनीयो न केनचित् । धारकांश्चैव वाय्वादीन्धारयन्वर्तते ततः ॥ १८ ॥ (विष्णोःकर्माणि) जानीथ विष्णुकर्माणि प्राणिकर्माण्यशेषतः । यतो जातान्यविज्ञातो भगवान्सर्वदैव च । स्पशा ज्ञातदृशौ यस्मादिन्द्रस्य स हितः सखा । प्राणस्यैवेन्द्रनाम्नश्च कस्मिन्त्वहमिति श्रुतेः । त्वयेदिन्द्रेतिवचनात्प्राण इन्द्राभिधो मतः ॥१९॥ (तद्विष्णोः) रमाब्रह्मशिवादिभ्यो यद्विष्णोः

---

स्योना पृथिवि भवानृक्षरा निवेशनी । यच्छा नः शर्म सप्रथः
॥ १५ ॥ ६ ॥

अतो देवा अवन्तु नो यतो विष्णुर्विचक्रमे ।
पृथिव्याः सप्त धामभिः १६

इदं विष्णुर्वि चक्रमे त्रेधा नि दधे पदम् । समूळ्हमस्य पांसुरे १७

त्रीणि पदा वि चक्रमे विष्णुर्गोपा अदाभ्यः । अतो धर्माणि धारयन् १८

विष्णोः कर्माणि पश्यत यतो व्रतानि पस्पशे । इन्द्रस्य युज्यः सखा १९

तद्विष्णोः परमं पदं सदा पश्यन्ति सूरयः । दिवीव चक्षुराततम् २०



परमं पदम् । रूपं पश्यन्ति निर्मुक्ताः संसारात्सूरयः सदा । चक्षुर्दिवीव व्याप्तं यद्दृश्यं फलदर्शितम् ॥ २० ॥ (तद्विप्रासः) संदीपयन्ति विज्ञानैः संसारात्प्राप्तजागराः । विपन्यवो ज्ञानितमा विष्णोर्यत्परमं पदम् । तात्पर्याधिक्यविज्ञप्त्या अर्थमेतं पुनर्जगौ ॥ ॥ २१ ॥ ७ ॥ ३ ॥ (२२) ॥

(तीव्राःसोमासः) वीर्यवन्तश्च ये सोमा यजमानेष्टसाधकाः । पिब तान् ॥१॥ (उभा) सर्वदेवानां ज्ञानाधिक्यौ दिविस्पृशौ ॥२॥ (इन्द्रवायू) मनसः प्रेरकौ चैव बहुज्ञानौ धियस्पती ॥ ३ ॥ (मित्रं) जज्ञानौ व्यज्यमानौ तु यजमानस्य शोधकौ ॥ ४ ॥ (ऋतेन) परेण ब्रह्मणा तस्मिन्वृद्धौ सत्यपती सदा । सत्यं ज्योतिः प्रकाशत्वात्तौ मित्रावरुणा हुवे ॥ ५ ॥ ८ ॥ (वरुणः) संसिद्धान्कुरुतां

---

तद् विप्रासो विपन्यवो जागृवांसः समिन्धते ।
विष्णोर्यत् परमं पदम् ॥ २१ ॥ ७ ॥ ३ ॥ (२२) ॥

मेधातिथिः काण्वः । १ वायुः, २-३ इन्द्रवायू, ४-६ मित्रावरुणौ, ७-९ इन्द्रो मरुत्वान्, १०-१२ विश्वे देवाः, १३-१५ पूषा, १६-२२, २३ (पूर्वार्धस्य) आपः, २३ (उत्तरार्धस्य), २४ अग्निः । १-१८ गायित्री, १९ पुरउष्णिक्, २१ प्रतिष्ठा, २०, २२-२४ अनुष्टुप् ।

तीव्राः सोमास आ गह्याशीर्वन्तः सुता इमे ।
वायो तान् प्रस्थितान् पिब १

उभा देवा दिविस्पृशेन्द्रवायू हवामहे । अस्य सोमस्य पीतये २

इन्द्रवायू मनोजुवा विप्रा हवन्त ऊतये । सहस्राक्षा धियस्पती ३

मित्रं वयं हवामहे वरुणं सोमपीतये । जज्ञाना पूतदक्षसा ४

ऋतेन यावृतावृधावृतस्य ज्योतिषस्पती । ता मित्रावरुणा हुवे ॥५॥८॥

वरुणः प्राविता भुवन् मित्रो विश्वाभिरूतिभिः ।
करतां नः सुराधसः ६

नस्तौ ॥ ६ ॥ (मरुत्वन्तं) सगणस्तृप्यतां हरिः ॥ ७ ॥ (इन्द्रज्येष्ठाः) पूषा पूर्णत्वतो विष्णुस्तन्मित्राः पूषरातयः ॥ ८ ॥ (हत) सहसा बलरूपेण शक्रेण सहिताः सुराः । मदज्ञानं हतातीव दानशीला न शक्नुयात् । दुर्वाक्तद्वान्पुमान्वा नो ॥ ९ ॥ (विश्वान्) भारती पृश्निरुच्यते । गोरूपा च क्वचित्साऽभूत्तत्सुताश्चाखिलाः सुराः । अन्यत्रापि सुतास्तस्याः ॥ १० ॥ ९ ॥ (जयतां) जयतामिव तद्ध्वनिः । धैर्याद्याति यदा विष्णुं वायुं वा याथनोत्तमम् ॥ ११ ॥ (हस्कारात्) दोषत्यागाद्गुणप्राप्तेर्हस्कारो वायुरुच्यते । विद्युद्विशिष्टज्ञानत्वाद्भारती तत्सुता हि ते । सर्वदेवाश्च मरुतो रक्षन्त्वेतादृशो हरिः । तत्तदन्तर्गतत्वेन ॥ १२ ॥ (आपूषन्) पूषा पूर्णत्वतश्च सः । आघृणिः पूर्णरश्मित्वादाजनश्चित्रबर्हिषम् । ब्रह्माणं च दिवो देव्या भर्तारं वायुमाजगाम् । यथागतम् ॥ १३ ॥ (पूषा) जगद्राजमविन्दद्भगवान्सुतम् । स्वकुक्षिगूढं ब्रह्माणम् ॥ १४ ॥ (उतोसः) मह्यं सोमैश्च तर्पितः । साधयामास षडयुक्तानिन्द्रियाणि चकार च । साधनं शक्तिदानं तु गोभिर्वाभिर्यथायवम् ॥ १५ ॥ १० ॥

---

मरुत्वन्तं हवामह इन्द्रमा सोमपीतये । सजूर्गणेन तृम्पतु ७
इन्द्रज्येष्ठा मरुद्गणा देवासः पूषरातयः । विश्वे मम श्रुता हवम् ८
हत वृत्रं सुदानव इन्द्रेण सहसा युजा । मा नो दुःशंस ईशत ९
विश्वान् देवान् हवामहे मरुतः सोमपीतये ।
उग्रा हि पृश्निमातरः ॥ १० ॥ ९ ॥ ४ ॥
जयतामिव तन्यतुर्मरुतामेति धृष्णुया । यच्छुभं याथना नरः ११
हस्काराद्विद्युतस्पर्यऽतो जाता अवन्तु नः । मरुतो मृळयन्तु नः १२
आ पूषञ्चित्रबर्हिषमाघृणे धरुणं दिवः । आजा नष्टं यथा पशुम् १३
पूषा राजानमाघृणिरपगूळ्हं गुहा हितम् । अविन्दच्चित्रबर्हिषम् १४
उतो स मह्यमिन्दुभिः षड् युक्ताँ अनुसेषिधत् ।
गोभिर्यवं न चर्कृषत् ॥ १५ ॥ १० ॥



(अंबयः) अंबयो मातरो ह्यापः कारणत्वात्सहोदराः । जगतो जामयो यस्मात्सह ताभिर्विवर्धते । अध्वरं कुर्वतां क्षीरं सोमं चापि प्रपृञ्चतीः । संपृक्ताः ॥ १६ ॥ (अमूः) याः समीपस्थाः सूर्यस्य सहिता अपि ॥ १७ ॥ (अपः) ह्वयामि ता याः पिबन्ति गावो नः सर्वथा हविः । कार्यं नदीभ्यः ॥ १८ ॥ (अप्स्वन्तः) तास्वन्तरदृश्यममृतं स्थितम् । अपामेव प्रशंसार्थं सहायाः सन्तु नः सुराः ॥ १९ ॥ (अप्सुमे) तात्पर्यार्थं पुनर्वाक्यं सुखाधारो हुताशनः ॥ २० ॥ ११ ॥ (आपःपृणीत) वरूथं गुप्तिरुद्दिष्टा ज्योतिर्विष्णुदृशे तथा । सूरिप्राप्यो यतो विष्णुः सूर्य इत्यभिधीयते । पृण दाने ॥ २१ ॥ (इदमापः) अखिलं पापमापः प्रवहतापि नः । हिंसाजं शेफजं चैव तथैवानृतसंभवम् ॥ २२ ॥ (आपः) रसेन सङ्गताश्च स्मो यस्मादनुचरा हि

---

अम्बयो यन्त्यध्वभिर्जामयो अध्वरीयताम् । पृञ्चतीर्मधुना पयः १६
अमूर्या उप सूर्ये याभिर्वा सूर्यः सह । ता नो हिन्वन्त्वध्वरम् १७
अपो देवीरुप ह्वये यत्र गावः पिबन्ति नः । सिन्धुभ्यः कर्त्वं हविः १८
अप्स्व१न्तरमृतमप्सु भेषजमपामुत प्रशस्तये । देवा भवत वाजिनः १९
अप्सु मे सोमो अब्रवीदन्तर्विश्वानि भेषजा ।
अग्निं च विश्वशंभुवमापश्च विश्वभेषजीः ॥ २० ॥ ११ ॥
आपः पृणीत भेषजं वरूथं तन्वे३ मम । ज्योक् च सूर्यं दृशे २१
इदमापः प्र वहत यत्किं च दुरितं मयि ।
यद् वाहमभिदुद्रोह यद् वा शेप उतानृतम् २२
आपो अद्यान्वचारिषं रसेन समगस्महि ।
पयस्वानग्न आ गहि तं मा सं सृज वर्चसा २३

वः ॥ २३ ॥ (संमाग्ने) कुर्युर्मामपि विद्वांसं मदर्थं सर्वदा सुराः ।
एनं मामिति वार्थः स्यादनुजानन्तु वोदितम् ॥२४॥१२॥४॥(२३)॥५॥

शुनःशेपो ददर्शात उत्तरं परमृक्शतम् । यूपादात्मविमोक्षाय
स्तुवन्देवान्पृथक्पृथक् । न्यूनं शतमिहैवान्यच्चतुर्थे पञ्चमेऽपि च ।
मण्डले ब्रह्मणोक्तस्तु क्रमोऽत्रापि हृचां भवेत् ॥ (कस्यनूनं) कर्तुः
परानन्दतनोरिदानीं मनामहे चारु विष्णोः सुराणाम् । नामेशश्चे-
दिन्दिरायै पुनर्दाद्दृशेयं तां मातरं तं च देवम् । स मुक्तानाममृता-
नामजेशमुख्यानां चाभ्यधिको यत्सुखादौ । तेनोक्तोऽसौ कतमो
खण्डितत्वात्स चादितिर्महती तन्मही च । देशानन्त्यात्तन्महत्त्वं
गुणैस्तु कालाच्चोक्तं तस्य चाखण्डितत्वम् । स एव माता च पिता च
देवस्तस्मिन्सदा संस्थितास्तत्पुनर्दात् । अत्ति विश्वं तेन चैवादितिस्स
श्रीर्वा ब्रह्मा प्रोक्त एवं क एव । गुणाश्च तस्याभ्यधिकाः सदैव
जीवेभ्यस्तत्सोऽपि तद्वाक्ययोग्यः । ददात्वसौ विष्णवे चेन्दिरायै
प्राप्तानस्मानपि तौ सर्वगत्वात् । विशेषदेशप्राप्तितस्तस्य चाप्तिर्वैकुण्ठादि-
लोंक उक्तो हरेश्च ॥ १ ॥ (अग्नेर्वयं) तस्यैवान्यद्रूपमग्नयाख्यमुक्तं
यो यज्ञेशो हूयते जामदग्न्यः । स देवानां प्रथमो नाम तस्य स्मृतं

सं माग्ने वर्चसा सृज सं प्रजया समायुषा ।
विद्युर्मे अस्य देवा इन्द्रो विद्यात्सह ऋषिभिः ॥२४॥१२॥(२३)॥५॥

आजीगर्तिः शुनःशेपः स कृत्रिमो वैश्वामित्रो देवरातः । १ कः
(प्रजापतिः), २ अग्निः, ३-५ सविता, ५ भगो वा,
६-१५ वरुणः । १, २, ६-१५ त्रिष्टुप्, ३-५ गायत्री ।

कस्य नूनं कतमस्यामृतानां मनामहे चारु देवस्य नाम ।
को नो मह्या अदितये पुनर्दात्पितरं च दृशेयं मातरं च १
अग्नेर्वयं प्रथमस्यामृतानां मनामहे चारु देवस्य नाम ।
स नो मह्या अदितये पुनर्दात् पितरं च दृशेयं मातरं च २



सार्थं सर्वकामप्रदं स्यात् ॥ २ ॥ (अभित्वा) सवितेत्यपरं रूपं
जगत्कारणमीशितुः । वित्तानामीश्वरं तं तु वार्यं हि वरणीयतः ।
वित्तं रक्षन्नवन्नित्यमात्मानं भागमेम्यहम् । त्वामैश्वर्यादिसमितिम् ॥
॥ ३ ॥ (यश्चित्) योऽपि ते परमो भगः । इत्थंभूतो विकारित्वा-
च्छशमानः सुखाधिकः । नेदीयसो ब्रह्मणोऽपि पूर्वो द्वेषादिवर्जितः ।
हस्तयोस्तं दधे देव तव रूपमनामयम् । निदो दवीय इति तु
विरुद्धार्थद्वयाभिधौ । दूरसामीप्यवचनावुभावपि महोदधौ । यदाऽन्य-
स्सविता देवस्तव स्वामी भगो हरिः । अद्वेषो विष्णुरित्युक्तेस्तमहं
हस्तयोर्दधे ॥ ४ ॥ (भगभक्तस्य) विष्णुभक्तस्य ते रायो मूर्धानं
राय उत्तमम् । तवावसाऽऽरभे विद्यामुच्चैरश्नामि तत्फलम् । ऐश्वर्यादि-
गुणा यस्य भगो भक्तं परात्मनः । तस्य ते वित्तमश्नामि तव रक्षा-
बलाद्धरे ॥ ५ ॥ १३ ॥ (नहिते) क्षतात्त्राणं ते बलसंविदं च पूर्णं
नापुर्मुक्तिगा ये विशिष्टाः । अपि स्वयं संसृतेरुत्पतन्तः पतयन्तोऽन्यां-
श्शिष्यभक्तानुदाराः । सदा शुभान्याचरन्तोऽपि देवा अब्देवता आप
इति श्रुतिर्यत् । गङ्गाद्या वा वासुदेवस्य विष्णोरुत्पत्तिं ये जानते
देवसङ्घाः । वयः सुपर्णा इति वाप्य ॥ ६ ॥ (अबुध्नेराजा)ऽबुध्ने
प्रकाशतः संभजतः स्वमुच्चैः । स्तूपं स्थानं ददते पूतदक्षो नीचस्था

अभि त्वा देव सवितरीशानं वार्याणाम् । सदावन् भागमीमहे ३
यश्चिद्धि त इत्था भगः शशमानः पुरा निदः । अद्वेषो हस्तयोर्दधे ४
भगभक्तस्य ते वयमुदशेम तवावसा । मूर्धानं राय आरभे ॥५॥१३॥
नहि ते क्षत्रं न सहो न मन्युं वयश्चनामी पतयन्त आपुः ।
नेमा आपो अनिमिषं चरन्तीर्न ये वातस्य प्रमिनन्त्यभ्वम् ६
अबुध्ने राजा वरुणो वनस्योर्ध्वं स्तूपं ददते पूतदक्षः ।
नीचीनाः स्थुरुपरि बुध्न एषामस्मे अन्तर्निहिताः केतवः स्युः ७

अप्यूर्ध्वगास्तेन तस्थुः । नीचाश्रये मुक्तिगा मानुषाद्यास्तेषां बुध्नो नीचलोकः सुरेभ्यः । नीचा गुणा अप्रकाशोऽथवैषां नीचोच्चत्वं क्रमशश्चाविरिश्चात् । अस्माकमन्तर्निहितानि नित्यं ज्ञानानि भूयासुरतोऽधिकानि । भवन्त्यर्हा भवितुं वा भविष्याः स्युर्द्विर्ग्रहे प्रार्थनैवाधिकार्थे ॥ ७ ॥ (उरुंहि) उरुं राजा रञ्जनाद्राजनाद्वा सूर्याय पन्थानमसौ चकार । स्वाज्ञानुसारेण सदैव गत्यै पादावपादाय च गन्तवेऽकरोत् । अज्ञाय विज्ञानमकः स गन्तुमात्मानमित्यर्थ इहाञ्जसोक्तः । बुद्धेर्धातुः शङ्करस्यापि दोषान्वक्ता ज्ञानाच्छिक्षकत्वाच्च विष्णुः ॥ ८ ॥ (शतन्ते) जगद्रक्षासाधनान्यप्यनन्तान्यनन्तधा सन्ति पुनस्तवेश । अगाधरूपा महती शुभा च मतिर्मम त्वद्विषये सदाऽस्तु । ऋतज्ञानप्रतिरूपत्वहेतोर्निर्ऋत्याख्यां दुर्मतिं दूर एव । बाधस्व दुर्ज्ञानिजनं निरस्य स्वर्गात्पराकृत्य च शश्वदेव । कृतं च पापं प्रमुमुग्धि मत्त ॥ ९ ॥ (अमीये) ऋक्षाण्यमी निहितानि त्वयोच्चैः । दृश्यानि रात्रौ न दिवा त्वयैवेत्यादीनि कर्माण्यनिरोधितानि । पश्यन्परानन्दतनोस्तवैव चन्द्रो नित्यं दृश्यमानस्त्वयैव । संप्रेरितो याति परे च देवा एवं त्वदाज्ञाकरणाः सदैव ॥ १० ॥ १४ ॥ (तत्त्वायामि) एवंगुणो यत्त्वमतो

---

उरुं हि राजा वरुणश्चकार सूर्याय पन्थामन्वेतवा उं।
अपदे पादा प्रतिधातवेऽकरुतापवक्ता हृदयाविधश्चित् ८
शतं ते राजन् भिषजः सहस्रमुर्वी गभीरा सुमतिष्टे अस्तु ।
बाधस्व दूरे निर्ऋतिं पराचैः कृतं चिदेनः प्र मुमुग्ध्यस्मत् ९
अमी य ऋक्षा निहितास उच्चा नक्तं ददृश्रे कुह चिद् दिवेयुः ।
अदब्धानि वरुणस्य व्रतानि विचाकशच्चन्द्रमा नक्तमेति ॥ १० ॥ १४ ॥
तत्त्वा यामि ब्रह्मणा वन्दमानस्तदा शास्ते यजमानो हविर्भिः ।
अहेळमानो वरुणेह बोध्युरुशंस मा न आयुः प्र मोषीः ११



व्रजामि सदा शरण्यं शरणं वेदवाचा । नमन्नन्यो यजमानो हविर्भिस्तदाशास्ते त्वद्गतिं देवदेव । अनिन्दन्नस्मान्नरमात्रबुद्ध्या सम्बोधयोच्चैः स्तुतमस्मदायुः । छेत्सी-॥ ११ ॥ (तदित्) नक्तं दिवसे चैतदेव स्तोत्रं त्वदीयं प्राहुरार्याः सुकार्यम् । मह्यं केतो ज्ञानरूपो हृदिस्थो नारायणो वक्त्ययं तेऽन्यरूपम् । पश्यत्यपीशो यं समह्वद्गृहीतः स नो देवो मोचयत्वग्रचदुःखात् ॥१२॥ (शुनःशेपोह्यह्वत्) शुनःशेपो ह्यह्वद्गृहीतः स्थानत्रये विक्रयाद्यैः सुबद्धः । द्रुतं प्राप्तानि द्रुपदानि विक्रयो यूपे बन्धः संज्ञपनोद्यमश्च । आदित्योऽसावादिसंस्थः परेशो वारीशान्तः संस्थितः स्तूयतेऽत्र । शुनःशेपो यमित्यादिकेन वारीशोऽपि ह्यृषिणा स्तूयमानः । गुणास्त्रयो द्रुपदानीति चोक्ता द्रवत्ययं जीवसङ्घो हि यत्र । करोत्वेनमवसृष्टं सृतेः स प्रसन्नोऽस्मान्कर्मपाशान्मुमोक्तु ॥ १३ ॥ (अवते) निन्दां च तेऽवाग्गतेर्हेतुभूतामवगच्छामः सेयमित्यप्ययोग्याम् । नमस्कारैस्त्वत्कृतैस्त्वन्मखैश्च हविर्युक्तैस्त्वत्प्रसादात्स च त्वम् । क्षितिरस्मभ्यं प्राणरन्ताखिलज्ञो वियोजयास्मत्कृतान्याश्वघानि ॥ १४ ॥ (उदुत्तमं) पुण्यं पापं मिश्रमित्येव पाशान्यथायोग्यं श्रथयान्येषु दत्वा । त्वन्निष्ठया तेन वयं त्वदीयलक्ष्म्याः पुत्राः स्याम मुक्ताः सृतेश्च । एषा विष्णोः

---

तदिन्नक्तं तद्दिवा मह्यमाहुस्तदयं केतो हृद आ वि चष्टे ।
शुनःशेपो यमह्वद्गृभीतः सो अस्मान् राजा वरुणो मुमोक्तु १२
शुनःशेपो ह्यह्वद्गृभीतस्त्रिष्वादित्यं द्रुपदेषु बद्धः ।
अवैनं राजा वरुणः ससृज्याद्विद्वाँ अदब्धो वि मुमोक्तु पाशान् १३
अव ते हेळो वरुण नमोभिरव यज्ञेभिरीमहे हविर्भिः ।
क्षयन्नस्मभ्यमसुर प्रचेता राजन्नेनांसि शिश्रथः कृतानि १४
उदुत्तमं वरुण पाशमस्मदवाधमं वि मध्यमं श्रथाय ।

केवलाऽप्येवमन्या अयोग्याया अन्यदेवेषु सम्यक् । वाक्यैर्विशिष्टै-रपवादहीनैर्ज्ञेया गुणा अन्यदेवेषु चैव । पतिः सोमो वरुणस्याप्यथाग्नेः पतिः सूर्यस्तावुभौ तुल्यवीर्यौ । सूर्याचन्द्रमसोः पतिरिन्द्रोऽस्य रुद्रः पतिर्ब्रह्मा पतिरस्यापि विष्णुः । पतिर्मुक्तेर्वासुदेवोऽथ दृष्टेर्ब्रह्मा विद्यायाः शर्व इन्द्रः क्रियायाः । क्रियांशानामधिपा अन्यदेवास्तथा फलानामपि मुक्तिमार्गे । यथायोग्यं स्वेन्द्रियप्रेरकाश्च ततः पूज्या देवता मुक्ति-कामैः । इति श्रुतेस्तारतम्यं गुणानां ज्ञात्वा योज्याः श्रुतयस्तत्र तत्र ॥ १५ ॥ १५ ॥ ५ ॥ (२४) ॥

(यच्चित्) दिवसे दिवसे देव कुर्मो यदपि ते व्रतं । यथैव सुजना ॥ १ ॥ (मानोवधाय) मा नो हन्तु साधय निघ्नते । जिहीळानस्त्यजन्धर्मं हरतो मा च मन्यवे ॥ २ ॥ (विमृळीकाय) मनस्त्वयि निबध्नीमो गीर्भिरश्वं वियोजितम् । बध्नाति सारथिर्यद्व-न्मृळीको रक्षकोऽधिकम् । त्वन्मनोऽस्मासु वा गीर्भी रक्षणाय विसीमहि ॥ ३ ॥ (पराहि) पराक्पतन्ति प्रज्ञा मे विविधाः शुभ-लब्धये । पक्षिणो वसतीर्यद्वद्धान त्वां प्राप्नुवन्ति च ॥ ४ ॥ (कदा) अतोऽखिलक्षत्रपतिमाह्वयामः कदा वयम् । अविनाशिनं

---

अथा वयमादित्य व्रते तवानागसो अदितये स्याम ॥१५॥१५॥५॥(२४)॥

आजीगर्तिः शुनःशेपः स कृत्रिमो वैश्वामित्रो देवरातः ।
वरुणः । गायत्री ।

यच्चिद्धि ते विशो यथा प्र देव वरुण व्रतम् । मिनीमसि द्यविद्यवि १
मा नो वधाय हत्नवे जिहीळानस्य रीरधः । मा हृणानस्य मन्यवे २
वि मृळीकाय ते मनो रथीरश्वं न संदितम् । गीर्भिर्वरुण सीमहि ३
परा हि मे विमन्यवः पतन्ति वस्यइष्टये । वयो न वसतीरुप ४
कदा क्षत्रश्रियं नरमा वरुणं करामहे । मृळीकायोरुचक्षसम् ॥५॥१६॥



रक्षणाय महादर्शनमञ्जसा ॥ ५ ॥ १६ ॥ (तदित्) तत्प्रसादाद्ब्रह्म-वायू सममेवावगच्छतः । वेनन्तौ हि विजानन्तौ तौ हि ज्ञानिवरौ मतौ । यथाज्ञानं प्रयोगं च दाशुषे कुरुतो न तौ । अश्विनौ वरुणश्चेत्स्या ॥ ६ ॥ (वेदायः) दाकाशे पक्षिणां पदम् । वेत्त्यसौ सूक्ष्मविज्ञानात्तथा नावो जलेऽब्धिगः । मुक्तानां च स्थितिं वेद ज्ञानस्य च गतिं पराम् । क्षीराब्धिशयनो विष्णुः ॥ ७ ॥ (वेदमासः) कालं कालोद्भवैः सह । य आत्मनः समीपे च जायते तं च पद्मजम् । मुक्तं वा ॥ ८ ॥ (वेदवातस्य) वर्तनां वायोर्महतोऽति-प्रकाशिनः । बृहतो ज्ञानिनश्चैव बृहतो महतोऽपि वा । अधिकानि पदान्येव देवा अध्यासतेऽपि तान् ॥ ९ ॥ (निषसाद) साम्राज्याय सपस्त्यासु निषसाद प्रजासु च । सुज्ञान- ॥ १० ॥ १७ ॥ (अतोविश्वानि) स्तत्र सन्विश्वान्यद्भुतानि च पश्यति । कर्ता चिकित्वान्स कृतकर्तव्यानि च पश्यति ॥ ११ ॥ (सनः) विश्वान्यहानि नो देवः सुपथानि करोत्वसौ । ददात्वायूंषि नो नित्यं मुक्तौ वा ॥ १२ ॥

---

तदित्समानमाशाते वेनन्ता न प्र युच्छतः । धृतव्रताय दाशुषे ६
वेदा यो वीनां पदमन्तरिक्षेण पतताम् । वेद नावः समुद्रियः ७
वेद मासो धृतव्रतो द्वादश प्रजावतः । वेदा य उपजायते ८
वेद वातस्य वर्तनिमुरोर्ऋष्वस्य बृहतः । वेदा ये अध्यासते ९
नि षसाद धृतव्रतो वरुणः पस्त्याइस्वा ।
साम्राज्याय सुक्रतुः ॥ १० ॥ १७ ॥
अतो विश्वान्यद्भुता चिकित्वाँ अभि पश्यति । कृतानि या च कर्त्वा ११
स नो विश्वाहा सुक्रतुरादित्यः सुपथा करत् ।
प्र ण आयूंषि तारिषत् १२

(बिभ्रत्) ऽतिद्रुतश्रमम् । हितं च रमणीयं च चक्रं स्वर्णं च वर्णतः ।
अबिभ्रच्च सुनिर्णिक्तं शुद्धं वस्त्रमवस्त च । अविज्ञातचरा देवाः
स्पशस्तस्य निषेदिरे । परितो वरुणः पाशमबिभ्रद्द्रुतबन्धनम् ॥१३॥
(नयं) स्तम्भयन्ति न यं वीरा स्तम्भका अपि राक्षसाः । जनानां
द्रोहिणो दैत्याः शत्रवश्चाभिमातयः ॥ १४ ॥ (उतयः) असमं च
यशश्चक्रे योऽस्माकं हृदयेषु च । अमानुषेषु चान्येषु समन्तादात्मनः
सदा । अज्ञेष्वपि च मर्त्येषु व्यतनोदात्मनो यशः ॥ १५ ॥ १८ ॥
(परामे) महाज्ञानं परेशानमिच्छन्त्यो मम धीतयः । सर्वतो यान्ति
यद्वच्च गावः शृङ्गस्वरा ननु ॥ १६ ॥ (सन्नु) आपूर्णं मधुमोक्षस्थं
सुखं पचसि मेऽग्निवत् । तत्संवोचावहै भूयः प्रियस्त्वं मम
यत्सदा ॥ १७ ॥ (दर्शन्नु) अदर्शं तं च सर्वज्ञं तद्रथं च भुवि
स्थितम् । सुगिरो मे जुषत च ॥ १८ ॥ (इमंमे) त्वा ऽवनेप्सु-
रहं चके । पश्येयं ॥ १९ ॥ (त्वंविश्वस्य) त्वं च विश्वस्य राजा
भवसि मेधिरः । मेधावान् ग्मः पृथिव्याश्च सकाले च प्रतिश्रुधि ॥२०॥

---

बिभ्रद्द्रापिं हिरण्ययं वरुणो वस्त निर्णिजम् ।
परि स्पशो नि षेदिरे १३
न यं दिप्सन्ति दिप्सवो न द्रुह्वाणो जनानाम् । न देवमभिमातयः १४
उत यो मानुषेष्वा यशश्चक्रे असाम्या । अस्माकमुदरेष्वा ॥ १५ ॥ १८ ॥
परा मे यन्ति धीतयो गावो न गव्यूतीरनु । इच्छन्तीरुरुचक्षसम् १६
सं नु वोचावहै पुनर्यतो मे मध्वाभृतम् । होतेव क्षदसे प्रियम् १७
दर्शं नु विश्वदर्शतं दर्शं रथमधि क्षमि । एता जुषत मे गिरः १८
इमं मे वरुण श्रुधी हवमद्या च मृळय । त्वामवस्युरा चके १९
त्वं विश्वस्य मेधिर दिवश्च ग्मश्च राजसि । स यामनि प्रति श्रुधि २०



(उदुत्तमं) स त्वं त्रिगुणपाशान्नो मुमुग्धि छिन्धि चाञ्जसा ॥
॥ २१ ॥ १९ ॥ ६ ॥ (२५) ॥

अथ स्तौत्यग्निगं विष्णुमग्निमप्यग्निगोचरैः । वचनैः ॥
(वसिष्व) सर्वदेवानां पूजार्थं प्रोद्यतो भवान् । वसिष्वोत्तमवस्त्राणि
भूषणैरप्यलङ्कुरु । कुर्वन्नुत्सवमत्यन्तमस्मदीयं मखं यज । नित्यमेध्य
हरे देव भोग्यान्नानां सदापते । ऊर्जितानां जनानां वा स्वस्मिन्नो
अध्वरं यज । रमयत्यध्वनि शुभे येन तेनाध्वरो मखः ॥ १ ॥
(निनः) वचो नो निनयात्यन्तं दिवि व्याप्ततया सदा । अशेषदेवग-
णेन मन्मभिर्मतिभिः सह । अवमो दशदेवेषु वह्निर्विष्णुस्तु
तत्स्थितः ॥ २ ॥ (आहि) सख्ये च सूनवे मह्यमायजत्येष देवताः ।
आपिः प्राप्यो मम स्वामी भृत्यत्वान्मह्यमापये ॥३॥ (आनः ॥४॥
पूर्व्यहोतः) अस्य मेऽर्थे कुरु मदं स्वातन्त्र्यान्मादयस्व वा ॥५॥२०॥
(यच्चित्) शश्वद्विस्तरतः सर्वान्यदा देवान्यजामहे । तदा त्वय्येव हि

---

उदुत्तमं मुमुग्धि नो वि पाशं मध्यमं चृत ।
अवाधमानि जीवसे ॥ २१ ॥ १९ ॥ ६ ॥(२५) ॥

आजीगर्तिः शुनःशेपः स कृत्रिमो वैश्वामित्रो देवरातः ।
अग्निः । गायत्री ।

वसिष्वा हि मियेध्य वस्त्राण्यूर्जां पते । सेमं नो अध्वरं यज १
नि नो होता वरेण्यः सदा यविष्ठ मन्मभिः । अग्ने दिवित्मता वचः २
आ हि ष्मा सूनवे पितापिर्यजत्यापये । सखा सख्ये वरेण्यः ३
आ नो बर्ही रिशादसो वरुणो मित्रो अर्यमा । सीदन्तु मनुषो यथा ४
पूर्व्य होतरस्य नो मन्दस्व सख्यस्य च ।
इमा उ षु श्रुधी गिरः ॥ ५ ॥ २० ॥
यच्चिद्धि शश्वता तना देवंदेवं यजामहे । त्वे इद्धूयते हविः ६

हविर्हूयते ॥६॥ (प्रियोनः।) सप्रियो भव। मन्द्रो मदकरः ॥७॥ (स्वग्नयः ॥ ८ ॥ अथानः) स्त्रीणां पुंसां चोभयवर्गिणां ॥ ९ ॥ (विश्वेभिः) चनः सुखं धा अस्मासु वायोः पुत्रोऽग्निरेव चेत्। भगवान्वायुना व्यङ्ग्यो ॥ १० ॥ २१ ॥ ७ ॥ (२६) ॥

(अश्वंन) वारवान्बडवामुखः। स्वदृष्टान्तो हरेर्यस्माद्विष्णुः स बडवामुखः ॥ १ ॥ (सघ) सूनुः स शवसो वायोः पृथुज्ञानः सुशेवकृत्। सुखकृन्नो भवेन्मीढ्वान्स्वामी नः सूनुरेव वा। व्यङ्ग्यत्वाद्वायुना सार्धं सुशेवः सुसुखात्मकः ॥ २ ॥ (सनः) आसात्समीपतश्चास्मानघार्थायोर्निपाहि च। प्रति प्रतिसदो नित्यो विश्वायु- ॥३॥ (इममूषु) स्त्वमिमां स्तुतिं। सनिं दानस्वरूपां च गायत्रीछन्दआत्मिकाम्। नव्यां संस्तुतिषु श्रेष्ठां वद देवेषु सादरम् ॥ ४ ॥

---

प्रियो नो अस्तु विश्पतिर्होता मन्द्रो वरेण्यः। प्रियाः स्वग्नयो वयम् ७
स्वग्नयो हि वार्यं देवासो दधिरे च नः। स्वग्नयो मनामहे ८
अथा न उभयेषाममृत मर्त्यानाम्। मिथः सन्तु प्रशस्तयः ९
विश्वेभिरग्ने अग्निभिरिमं यज्ञमिदं वचः।
चनो धाः सहसो यहो ॥ १० ॥ २१ ॥ २६ ॥

आजीगर्तिः शुनःशेपः स कृत्रिमो वैश्वामित्रो देवरातः।
१-१२ अग्निः, १३ देवाः। १-१२ गायत्री, १३ त्रिष्टुप्।

अश्वं न त्वा वारवन्तं वन्दध्या अग्निं नमोभिः।
सम्राजन्तमध्वराणाम् १
स घा नः सूनुः शवसा पृथुप्रगामा सुशेवः।
मीढ्वाँ अस्माकं बभूयात् २
स नो दूराच्चासाच्च नि मर्त्यादघायोः। पाहि सदमिद्विश्वायुः ३
इममू षु त्वमस्माकं सनिं गायत्रं नव्यांसम्। अग्ने देवेषु प्र वोचः ४



(आनः) उत्तमाधममध्येषु भोगेष्वस्मानवाप्नुहि। रक्षकत्वेन शिक्षास्माञ्ज्ञानवस्वर्थमेव च। अन्ते मोक्षे मितत्वेन ज्ञानमन्तममुच्यते ॥ ॥ ५ ॥ २२ ॥ (विभक्तासि) क्षीराब्ध्यूर्मिसमीपस्थो मुक्तभोगविभागदः। यजमानाय सद्यश्च क्षरस्यखिलमीप्सितम्। नित्यमुत्तमतेजस्त्वाच्चित्रभानुर्हरिः स्मृतः ॥ ६ ॥ (यमग्ने) यं मर्त्यं रक्षसि विभो यं युत्सु प्रेरयस्यपि। ज्ञानाज्ञानात्मकेष्वेव स गन्ता नित्यसत्सुखम्। भोगान्वा मुक्तिगान्नित्यानिह चेदुपचारतः ॥७॥ (नकिः) परिपूर्णोऽस्य नैवास्ति त्वदीयस्य तु कस्यचित्। भोगोऽपि बहुलो यस्माद्दित्सस्येव पुनः पुनः। सहन्त्यः सन्ततबलः सहसः पुत्र एव वा। श्रवाय्यः श्रवणीयश्च सुप्रसिद्धतमोऽपि वा ॥ ८ ॥ (सवाजं) वाजं तारयिताऽऽनेता सोर्वद्भिर्गोसमाप्तितः। त्वदीयस्तु भवेद्विप्रैर्दाता विपुलदानतः। युद्धस्य तारकोऽन्नस्य दाता भोगस्य वा भवेत्। इन्द्रियैस्तमसा युद्धं कृता ज्ञानदोऽथ वा ॥ ९ ॥ (जराबोध) स्तुतिबोद्धा यतस्तां त्वमवधारय सर्वदा। नित्यज्ञानोऽपि दत्वा तत्फलं वेत्तेति कथ्यते। रुजां विद्रावकेशाय प्रत्यक्षां तव वा स्तुतिम् ॥ १० ॥ २३ ॥

---

आ नो भज परमेष्वा वाजेषु मध्यमेषु।
शिक्षा वस्वो अन्तमस्य ॥ ५ ॥ २२ ॥
विभक्तासि चित्रभानो सिन्धोरूर्मा उपाक आ।
सद्यो दाशुषे क्षरसि ६
यमग्ने पृत्सु मर्त्यमवा वाजेषु यं जुनाः। स यन्ता शश्वतीरिषः ७
नकिरस्य सहन्त्य पर्येता कयस्य चित्। वाजो अस्ति श्रवाय्यः ८
स वाजं विश्वचर्षणिरर्वद्भिरस्तु तरुता। विप्रेभिरस्तु सनिता ९
जराबोध तद्विविड्ढि विशेविशे यज्ञियाय।
स्तोमं रुद्राय दृशीकम् ॥ १० ॥ २३ ॥

(सनः) नितराममितत्वेन महान्पुरुसुखश्च सः। धूत्करोति गरुत्मान्यद्धरेश्चेद्धूमकेतुता। ताच्छील्ये म इति ह्यस्मात्सूत्राद्धूम इतीरितः। ज्ञानायान्नाय च स नः प्रहिणोतु सुकर्मणाम् ॥ ११ ॥ (सरेवान्) देवानां केतुभूतोऽसौ वित्तवान्विश्पतिर्यथा। अस्मदीयानि चोक्थानि बृहत्तेजाः शृणो- ॥ १२ ॥ (नमः) त्वथ। नारायणब्रह्मपुरःसरास्तु देवा महान्तः शिशवः स्कन्दपूर्वाः। बटुस्वरूपाश्च त एव कुत्रचिद्युवान इन्द्रादय एत एव। महत्त्वमेषां गुणतोऽपि यूनामिन्द्रादयो मध्यगुणा युवानः। आपेक्षिकाल्पैश्च गुणैस्तदीयैः समीरिता आशिना अर्भकाश्च। कृतं नमः शक्तिमन्तो यजाम न ज्यायसां स्तुतिमात्रं लुपामः। एकस्य विष्णोरपि रूपभेदा अणीयांसः संत्यथवा महान्तः। युवत्वसाम्येऽपि महत्त्वभेदाद्युवा महानित्यपि भेद उक्तः ॥

॥ १३ ॥ २४ ॥ ८ ॥ (२७)

(यत्रग्रावा) विस्तीर्णाधस्तना यत्र ग्रावाणोऽभिषवोद्धृताः। धिषणाभिषुतान्सोमानव नः स्वीकृतस्तु ते। गुरु स्वीकार इत्यस्माद्धातोः स्तुत्यो हि जल्गुलः ॥ १ ॥ (यत्रद्वौ) फलकेऽभिषवस्यैव स्त्रियो जघनसाम्यतः। प्रोक्ते ॥ २ ॥ (यत्रनारी) उपच्यवश्चापच्यवः सङ्गतिभेदतः। जिह्वाग्रा वाथ वाग्युक्तिरुच्यतेऽभिषवस्तथा। खलश्चोरुस्तथा देहः सोमो मन इतीरितः। ज्ञानोत्पत्तौ च फलकस्थाने ओष्ठे उदीरिते ॥ ३ ॥ (यत्रमन्थां) मन्थरश्मीनश्वरश्मीन्यथा यत्र निबध्यते। रश्मयो यत्र नाड्यश्च ॥ ४ ॥ (यच्चित्) यस्माद्युक्तो गृहे गृहे। देहे देहेऽथवा तेन द्युमद्दुन्दुभिवद्वद। पृथिवी देवता तस्य तद्गतो वा स्वयं हरिः। सोमामात्यो परो देवो वनस्पतिरितीरितः। सोमो वा तद्गविष्णुर्वा श्रुतः फलकदेवता। वृक्षाणामपि सर्वेषामतो ॥ ५ ॥ २५ ॥ (उतस्म) वृक्षाग्र एव तु। वायुर्वाति वनानां वा भजनीयदिवौकसाम्। पतिर्विष्णुस्तु तस्याग्रे वायुर्देवो हि गच्छति। पातवे स्वस्य सोमं वा मनो वा सुनु विष्णवे ॥ ६ ॥ (आयजी) आयज्वावन्नलब्धृणामुत्तमावतिभक्षकौ। जह भक्षण

स नो॑ म॒हाँ अ॑निमा॒नो धू॒मके॑तुः पुरुश्च॒न्द्रः। धि॒ये वाजा॑य हिन्वतु ११
स रे॒वाँ इ॑व वि॒श्पति॒र्दैव्यः॑ के॒तुः शृ॑णोतु नः। उ॒क्थैर॒ग्निर्बृ॒हद्भा॑नुः १२
नमो॑ म॒हद्भ्यो॒ नमो॑ अर्भ॒केभ्यो॒ नमो॒ युव॑भ्यो॒ नम॑ आशि॒नेभ्यः॑।
यजा॑म दे॒वान्यदि॑ श॒क्नवा॑म॒ मा ज्याय॑सः॒ शंस॒मा वृ॑क्षि देवाः ॥
॥ १३ ॥ २४ ॥ (२७) ॥

आजीगर्तिः शुनःशेपः स कृत्रिमो वैश्वामित्रो देवरातः। १-४ इन्द्रः, ५-६ उलूखलं, ७-८ उलूखलमुसले, ९ प्रजापतिर्हरिश्चन्द्रः, (अधिषवण–) चर्म सोमो वा। १-६ अनुष्टुप्, ७-९ गायत्री।

यत्र॒ ग्रावा॑ पृ॒थुबु॑ध्न ऊ॒र्ध्वो भव॑ति॒ सोत॑वे।
उ॒लूख॑लसुताना॒मवेद्वि॑न्द्र जल्गुलः १



यत्र॒ द्वावि॑व ज॒घना॑धिषव॒ण्या॑ कृ॒ता।
उ॒लूख॑लसुताना॒मवेद्वि॑न्द्र जल्गुलः २
यत्र॒ नार्य॑पच्य॒वमु॑पच्य॒वं च॒ शिक्ष॑ते।
उ॒लूख॑लसुताना॒मवेद्वि॑न्द्र जल्गुलः ३
यत्र॒ मन्थां॑ विब॒ध्नते॑ र॒श्मीन्यमि॑तवा इ॑व।
उ॒लूख॑लसुताना॒मवेद्वि॑न्द्र जल्गुलः ४
यच्चि॒द्धि त्वं गृ॒हेगृ॑ह॒ उलू॑खलक यु॒ज्यसे॑।
इ॒ह द्यु॒मत्त॑मं वद॒ जय॑तामिव दुन्दु॒भिः ॥ ५ ॥ २५ ॥
उ॒त स्म॑ ते वनस्पते॒ वातो॒ वि वा॒त्यग्र॒मित्।
अथो॒ इन्द्रा॑य॒ पात॑वे सु॒नु सोम॑मुलूखल ६
आय॒जी वा॑ज॒सात॑मा॒ ता ह्यु॑१॒च्चा वि॑ज॒र्भृतः॑। हरी॑ इ॒वान्धां॑सि॒ बप्स॑ता ७

इत्यस्माद्यथाऽश्वावन्नभक्षकौ । सोमस्य भक्षकावत्र ॥ ७ ॥ (तानः) ऋष्वावतिमहत्तरौ । महद्भिः सोतृभिः सोममिन्द्राय मधुमत्सुतम् ॥ ॥ ८ ॥ (उच्छिष्टं) सोममुत्पवनायैतं द्रोणो परिपवित्रके । भर शिष्टं चमसयोर्ऋजीषं गोरधि त्वचि । भरेत्यात्मानमेवाह स्वान्तर्यामिण-मेव वा । शिरोभेदौ तु चमसौ द्रोणं चोदरमीरितम् । पवित्रं बुद्धिरेवात्र मनःशुद्धिस्तया यतः । मुखचर्मैव गोचर्म मन एतेषु विष्णवि । धार्यं ॥ ९ ॥ २६ ॥ ९ ॥ (२८)

(यच्चिद्धि) यत्सद्गुणाऽशस्ता इव स्मसि वयं ततः । शुभ्र-वाङ्मनआदीनां विषयेऽस्मान्प्रशंसय । बहुवाच्यज्ञेययुक्तान्कृत्वाऽस्मांस्त्वं महामख ॥ १ ॥ (शिप्रिन्) सुखिन्नन्नपते वाग्ज्ञ तव कर्माणि सर्वशः ॥ २ ॥ (निष्वापय) दैत्यरक्षःप्रजे मिथ्यादृशौ सस्तां पुनर्बहु ।

---

ता नो अद्य वनस्पती ऋष्वावृष्वेभिः सोतृभिः ।
इन्द्राय मधुमत्सुतम् ८
उच्छिष्टं चम्वोर्भर सोमं पवित्र आ सृज ।
नि धेहि गोरधि त्वचि ॥ ९ ॥ २६ ॥ ९ ॥ (२८) ॥

आजीगर्तिः शुनःशेपः स कृत्रिमो वैश्वामित्रो देवरातः ।
इन्द्रः । पङ्क्तिः ।

यच्चिद्धि सत्य सोमपा अनाशस्ता इव स्मसि ।
आ तू न इन्द्र शंसय गोष्वश्वेषु शुभ्रिषु सहस्रेषु तुवीमघ १
शिप्रिन्वाजानां पते शचीवस्तव दंसना ।
आ तू न इन्द्र शंसय गोष्वश्वेषु शुभ्रिषु सहस्रेषु तुवीमघ २
नि ष्वापया मिथूदृशा सस्तामबुध्यमाने ।
आ तू न इन्द्र शंसय गोष्वश्वेषु शुभ्रिषु सहस्रेषु तुवीमघ ३



अबुध्यमाने नित्यं च यथा निष्वापयेश्वर ॥ ३ ॥ (ससन्तु) स्वपन्तु ते शत्रवस्ते सर्वदाऽज्ञानमोहिताः । बोधन्तु चैव मित्राणि तव रूपं सुनिर्भयम् ॥ ४ ॥ (समिन्द्र) पापया मायया मिथ्यास्तुवन्तं त्वामपि प्रभो । मायामयास्तवगुणा न सन्ति परमार्थतः । इति नित्यं रुवन्तं च मायावाद्याख्यगर्दभम् । संचूर्णय तमस्येव क्षिप्त्वा तप्ताश्मभिः सदा ॥ ५ ॥ (पताति) दूरं च पातयत्वेनान्वायुस्तस्मिंस्तमस्यधः । वनं दृढग्रहेणैव तत्तमोवेदनोल्बणा । कुण्डृणाचीति संप्रोक्ता कुण्डा-न्नीचत्वतोऽधिकम् । कुम्भः कुण्डाभिधः कुम्भीपाकान्नीचा हि तद्गतिः । रेफः स्वरव्यत्ययश्च तदाधिक्यार्थमीरितौ ॥ ६ ॥ (सर्वं) सर्वं परि-क्रोशकरं पापिनं जहि जम्भय । दंशय श्वादिभिर्नित्यं क्रकचैर्दशनं यथा ॥ ७ ॥ २७ ॥ १० ॥ (२९) ॥

(आवः) हे वाजयन्तो युध्यन्तो देवा भोगिन एव वा । सोमैर्व इन्द्रमासिञ्चे क्रिविं यद्वन्नृपं कृतेः । कर्तारमीशमिव वा

---

ससन्तु त्या अरातयो बोधन्तु शूर रातयः ।
आ तू न इन्द्र शंसय गोष्वश्वेषु शुभ्रिषु सहस्रेषु तुवीमघ ४
समिन्द्र गर्दभं मृण नुवन्तं पापयामुया ।
आ तू न इन्द्र शंसय गोष्वश्वेषु शुभ्रिषु सहस्रेषु तुवीमघ ५
पताति कुण्डृणाच्या दूरं वातो वनादधि ।
आ तू न इन्द्र शंसय गोष्वश्वेषु शुभ्रिषु सहस्रेषु तुवीमघ ६
सर्वं परिक्रोशं जहि जम्भया कृकदाश्वम् ।
आ तू न इन्द्र शंसय गोष्वश्वेषु शुभ्रिषु सहस्रेषु तुवीमघ
॥ ७ ॥ २७ ॥ १० ॥ (२९) ॥

आजीगर्तिः शुनःशेपः स कृत्रिमो वैश्वामित्रो देवरातः । १-१६ इन्द्रः, १७-१९ अश्विनौ, २०-२२ उषाः । १-१०, १२-१५, १७-२२ गायत्री, ११ पादनिचृद्गायत्री, १६ त्रिष्टुप् ।

आ व इन्द्रं क्रिविं यथा वाजयन्तः शतक्रतुम् । मंहिष्ठं सिञ्च इन्दुभिः १

स्वदृष्टान्तो हरेर्भवेत् ॥ १ ॥ (शतंवा) शतेन वा सहस्रेण सोमाना-
माशिरावताम् । पाताल इव नैवायं निलीनो भवति क्वचित् ।
विलापयति तानेव ॥ २ ॥ (संयत्) बलिनेऽस्मै मदाय च ।
संदधुर्नैव विश्वानि व्यक्तीरस्योदरे क्वचित् । समुद्रेकात्समुद्राख्या
प्रकृतिश्च महत्त्वतः ॥ ३ ॥ (अयमुते) तयैवायं प्रपञ्चश्च कपोतो
गर्भधिं यथा । सम्यग्व्याप्नोषि विश्वं च तस्मान्नोऽव च ओहसे ॥४॥
(स्तोत्रं) गिरां वाहक ते स्तोत्रमखिलं वेदवैदिकम् । सूनृता वागियं
मे च विभूतिरिरिति कल्प्यताम् । अस्त्वित्येतत्प्रसादेन फलदाना-
दुदीर्यते ॥ ५ ॥ २८ ॥ (ऊर्ध्वः) उत्तमः सन्नत्र युद्धे ज्ञानाज्ञानमये
विभो । अभिप्रेतार्थसिद्ध्यर्थमस्माकं तिष्ठ सर्वदा । मत्स्थितस्त्वमहं
चैव त्वामन्येषु ब्रवावहै ॥ ६ ॥ (योगे) तेजस्वितममिन्द्रं तं योगे योगे
हवामहे ॥ ७ ॥ (आघ) उक्तं चेत्स श्रृणोत्येव श्रुतं चेदागमिष्यति ।
बह्वर्थयुक्ताभिप्रायैरन्नैरप्युप नो हवं ॥ ८ ॥ (अनु) पुरातनस्य
विष्णोस्तदोकसोऽर्थे ह्वये हरिम् । महान्प्रति प्रतिस्थश्च तुविप्रति-

---

शतं वा यः शुचीनां सहस्रं वा समाशिराम् । एदु निम्नं न रीयते २
सं यन्मदाय शुष्मिण एना ह्यस्योदरे । समुद्रो न व्यचो दधे ३
अयमु ते समतसि कपोत इव गर्भधिम् । वचस्तच्चिन्न ओहसे ४
स्तोत्रं राधानां पते गिर्वाहो वीर यस्य ते ।
विभूतिरस्तु सूनृता ॥ ५ ॥ २८ ॥
ऊर्ध्वस्तिष्ठा न ऊतयेऽस्मिन् वाजे शतक्रतो । समन्येषु ब्रवावहै ६
योगेयोगे तवस्तरं वाजेवाजे हवामहे । सखाय इन्द्रमूतये ७
आ घा गमद्यदि श्रवत्सहस्रिणीभिरूतिभिः । वाजेभिरुप नो हवम् ८
अनु प्रत्नस्यौकसो हुवे तुविप्रतिं नरम् । यं ते पूर्वं पिता हुवे ९





रितीरितः । यं त्वां पूर्वं पिता ज्ञातैवाह्वयामास विश्वकृत् । त्वद्भक्त
इति वा ब्रह्मा ॥ ९ ॥ (तंत्वा) तं त्वामाशास्महे वयं ॥ १० ॥ २९ ॥
(अस्माकं) अस्माकं सुखिनां सोमपातॄणा- ॥ ११ ॥ (तथातत्) मस्तु
तत्तथा । ते सकाशाद्यथेच्छामः प्राप्तुं देव तथा कृणु । वज्रो ज्ञानं
वज गतावित्यस्मा- ॥ १२ ॥ (रेवतीः) द्वित्तसंयुताः । रेवतीः पशवः
प्रोक्ताः सधमादे सुखस्थितौ । तुवि वाजमहान्नानि क्षुमन्तः स्थिति-
संयुताः । ज्ञानयुक्तं सुखं वा स्यात्सतीशेऽस्माकमूर्जितं ॥ १३ ॥
(आघ) त्वद्वांस्तयैव चाप्तः स्यात्स्तोतॄणामासमन्ततः । इयानो गम्य-
मानस्तै रणतोश्चक्रयोर्यथा । अक्षमाश्रयभावेन ॥ १४ ॥ (आयत्)
स्तोतॄणां काममादुहः । आसमन्तात्स्थितं काममत्याधिक्ये पृथ-
क्पदम् ॥ १५ ॥ ३० ॥ (शश्वदिन्द्रः) क्रोधाच्छ्वसद्भिः प्रथयद्भि-
रात्मवीर्यं सुरैः शश्वदिन्द्रो जिगाय । धनानि नः स्वर्णरथं च दाता

---

तं त्वा वयं विश्ववाराऽऽशास्महे पुरुहूत ।
सखे वसो जरितृभ्यः ॥ १० ॥ २९ ॥
अस्माकं शिप्रिणीनां सोमपाः सोमपाव्नाम् । सखे वज्रिन्त्सखीनाम् ११
तथा तदस्तु सोमपाः सखे वज्रिन्तथा कृणु । यथा त उश्मसीष्टये १२
रेवतीर्नः सधमाद इन्द्रे सन्तु तुविवाजाः । क्षुमन्तो याभिर्मदेम १३
आ घ त्वावान्त्मनाप्तः स्तोतृभ्यो धृष्णवियानः ।
ऋणोरक्षं न चक्र्योः १४
आ यद्दुवः शतक्रतवा कामं जरितॄणाम् ।
ऋणोरक्षं न शचीभिः ॥ १५ ॥ ३० ॥
शश्वदिन्द्रः पोप्रुथद्भिर्जिगाय नानदद्भिः शाश्वसद्भिर्धनानि ।
स नो हिरण्यरथं दंसनावान्त्स नः सनिता सनये स नोऽदात् १६

लब्धा प्रादाल्लाभकृते च नोऽखिलम् ॥ १६ ॥ (आश्विनौ) गोमद्धिरण्यवच्च स्याद्यथायातं तथैव नः । सुखपुत्रयुजा चाश्ववत्येषा शं सुखं यतः । इडैश्वर्यं तथा वीरं वीर्यं स्वान्यश्वनामतः । गौर्वाग्घितं च रमणं परं ब्रह्मगुणोच्छ्रितम् ॥ १७ ॥ (समान) समानयोगयुक्तोऽयं रथो देहस्त्वदात्मनाम् । चित्सुखत्वादमर्त्यश्च ज्ञायते क्षीरसागरे । मोक्षस्य यावता प्राप्तिः समानो योग उच्यते ॥ १८ ॥ (न्य१घ्नयस्य) एकं चक्रं गिरेर्मूर्ध्नि नियतं दिवि चापरम् । पापं चक्रं हरिघ्नयस्य पुण्यं दिव्यस्य चोपरि ॥ १९ ॥ (कस्ते) को मर्त्यस्तव भोगाय यतः सर्वप्रियो भवान् । किमपि प्रियमस्येति पूर्णानन्दात्कधप्रियः । आप्तकामत्वतः कं वा गच्छसि स्वार्थहेतुतः । विशेषाद्धावृतेर्विष्णुः कथितश्च विभावरी ॥२०॥ (वयंहि) चिन्तयामस्त्वैकस्य विश्वमान्तपराकयोः । पराकः सुसुखैव श्रीरन्तः कविरुदाहृतः । नरकस्वर्गयोरेव देव्युषा उदिता यदा । जात्यश्ववत्सदा भद्रे चारुणे ॥ २१ ॥ (त्वंत्येभिः) प्राणवाक्सुते । तद्व्यंग्यत्वाद्धरिश्चैव दिवस्पुत्र उदाहृतः ॥ २२ ॥ ३१ ॥ ११ ॥ (३०) ॥



आश्विनावश्वावत्येषा यातं शवीरया । गोमद्दस्रा हिरण्यवत् १७
समानयोजनो हि वां रथो दस्रावमर्त्यः । समुद्रे अश्विनेयते १८
न्य१घ्न्यस्य मूर्धनि चक्रं रथस्य येमथुः । परि द्यामन्यदीयते १९
कस्त उषः कधप्रिये भुजे मर्तो अमर्त्ये । कं नक्षसे विभावरि २०
वयं हि ते अमन्मह्यान्तादा पराकात् । अश्वे न चित्रे अरुषि २१
त्वं त्येभिरा गहि वाजेभिर्दुहितर्दिवः ।
असे रयिं नि धारय ॥ २२ ॥ ३१ ॥ ११ ॥ (३०) ॥



अग्नीन्द्रादिगतं पृथक्स्थितमपि स्तौत्यच्युतं भक्तितः स्वर्णस्तूप इतिप्रसिद्धिमगमद्यः संस्तुवन्सूर्यगम् । विष्णुं स्वर्णसमानचारुवपुषं स्वर्णाभिधं शाश्वतं तं दृष्ट्वा परतोऽभवच्च महितः सुज्ञानमप्याप्तवान् ॥ (त्वमग्ने प्रथमो अङ्गिरा ऋषिः) अङ्गे रसो ज्ञानत एव चर्षिः सखा प्रियत्वेन दिवौकसां हरिः । तव व्रतेनैव सविद्यकर्मिणो महाविज्ञाना मरुतो बभूविरे ॥ १ ॥ (त्वमग्ने प्रथमो अङ्गिरस्तमः) व्यापी च विश्वस्य सुमेधया युतो जडाजडे वेत्ति तथाऽब्धिशायी । कतिप्रकारोऽपि स हि प्रजायै स्वामी गुरुर्नित्यसखा पिता च ॥ २ ॥ (त्वमग्ने प्रथयो मातरिश्वने) त्वं विष्णो प्रथमो मातरिश्वन आविर्भूवास्य सुबोधवत्त्वात् । वायुर्विवस्वान्विविधेषु वासादशोभेतां श्रीश्च भूः सर्वहोतुः । वरत्वतस्ते रदनाद्रोदसी ते सैका हि दीर्णा द्विविधा बभूव । सहन्तेऽमुं नैव केचिद्धसम्भुर्वायुर्विरिश्चोऽपि महांश्च तस्मै । विश्वस्य भारं प्रतिदिष्टवांस्त्वं वासाच्च सर्वत्र वसुर्भवानसि ॥ ३ ॥ (त्वमग्ने मनवे) विशिष्टबोधान्मनवे वायवे त्वं प्रादाद्दिवं ज्ञानरूपां प्रियां च । यथा तदीयेति तु वाशनं स्याल्लोकस्य सर्वस्य तथैव देव ।

हिरण्यस्तूप आङ्गिरसः । अग्निः । जगती, ८-१६-१८ त्रिष्टुप् ।

त्वमग्ने प्रथमो अङ्गिरा ऋषिर्देवो देवानामभवः शिवः सखा ।
तव व्रते कवयो विद्मनापसोऽजायन्त मरुतो भ्राजदृष्टयः १
त्वमग्ने प्रथमो अङ्गिरस्तमः कविर्देवानां परि भूषसि व्रतम् ।
विभुर्विश्वस्मै भुवनाय मेधिरो द्विमाता शयुः कतिधा चिदायवे २
त्वमग्ने प्रथमो मातरिश्वन आविर्भव सुक्रतूया विवस्वते ।
अरेजेतां रोदसी होतृवूर्येऽसघ्नोर्भारमयजो महो वसो ३
त्वमग्ने मनवे द्यामवाशयः पुरूरवसे सुकृते सुकृत्तरः ।

पुरूरवा वायुरेवोरुशब्दादन्यस्मै वा सुकृते सुकृत्तरः । श्वा वै वायुः श्वसनाद्ध्राणतोऽस्य नित्यं मुक्तः प्रकृतेः पूरुषाच्च । तेनैव त्वामानयन्पूर्वसन्तो नीतं पुनश्चाप्यपरे सुभक्त्या ॥ ४ ॥ (त्वमग्ने वृषभः) श्रोतव्यस्त्वं यजमानेन नित्यं नित्यायुरग्रे जनताप्रविष्टः । ऐश्वर्याद्याः षड्गुणा नित्यवृत्ता वषट्कारस्यार्थ इत्याह वेदः ॥ ५ ॥ ३२ ॥ (त्वमग्ने वृजिनवर्तनिं) सद्विद्याख्ये विदथे संप्रजाते पापाचारं पुरुषं वा पिपर्षि । सक्मन् गृहे स्वे विविधप्रजेशो विचर्षणिः शूरसातौ च युद्धे । सातिर्लाभे यत्परितक्म्येऽधिगम्ये दभ्रा अपि त्वां शरणं यदि स्म । ऋतागतास्तत्र हि भूयसोऽपि तैर्हंसि शक्त्या संख्यया वा प्रयत्नात् ॥ ६ ॥ (त्वंतं) दिने दिने तत्स्तुतिं श्रोतुकामस्तव स्तोतारममृतत्वे दधासि । प्रीत्याधिक्यात्ततृषाणो मनुष्यदेवोभयेषां सुखमातनोषि । आसमन्ताज्ज्ञानिने तत्र नित्यं प्रियं मोक्षाख्यं ततृषाणो विशेषात् ॥ ७ ॥ (त्वंनोअग्नेसनये) प्रज्ञाधनानां लब्धये नः कृधि त्वं यशस्विनं कारिणं ज्ञानदं च । कर्तापरोक्ष्यं यावदुपासनादीन्कारुस्तेन प्रोच्यते तत्त्वदर्शी । संस्तूयमानः कर्मणा

श्वात्रेण यत्पित्रोर्मुच्यसे पर्याऽऽत्वा पूर्वमनयन्नापरं पुनः ४
त्वमग्ने वृषभः पुष्टिवर्धन उद्यतस्रुचे भवसि श्रवाय्यः ।
य आहुतिं परि वेदा वषट्कृतिमेकायुरग्रे विश आविवाससि ॥५॥३२॥
त्वमग्ने वृजिनवर्तनिं नरं सक्मन्पिपर्षि विदथे विचर्षणे ।
यः शूरसाता परितक्म्ये धने दभ्रेभिश्चित्समृता हंसि भूयसः ६
त्वं तमग्ने अमृतत्व उत्तमे मर्तं दधासि श्रवसे दिवेदिवे ।
यस्तातृषाण उभयाय जन्मने मयः कृणोषि प्रय आ च सूरये ७
त्वं नो अग्ने सनये धनानां यशसं कारुं कृणुहि स्तवानः ।
ऋध्याम कर्मापसा नवेन देवैर्द्यावापृथिवी प्रावतं नः ८



नूतनेन समृद्धिं च प्राप्नुमः प्राक्तनस्य ॥ ८ ॥ (त्वन्नोअग्नेपित्रोः) त्वं नः पित्रोः प्रकृतेः पूरुषस्य समीपस्थस्तन्नियन्ता सदैव । देवेषु त्वं जागृविर्नित्यवेत्ता तनूकृन्नो बोधय प्राज्ञवर्यः । विश्वं वसु प्रार्पयसे च कारवे ॥ ९ ॥ (त्वमग्नेप्रमतिः) आयुष्करो भ्रातरस्ते वयं च । देहे त्वेकस्मिन् गर्भवद्वासतश्च भ्राताऽस्य जीवः परमस्य नित्यम् ॥१०॥३३॥ (त्वामग्ने) आयो राज्ञो हृदये प्रेरकत्वादायोरायुर्नहुषस्याधिपश्च । चक्रुर्देवा देहसृष्टचैव तस्य यन्नामान्तर्यामिणो जीवगं च । नामार्थभाग्वासुदेवो हि शक्त्या तेन ह्यायुः प्रथमोऽसाविहोक्तः । मनुर्नाम्ना मनुषस्तस्य चेला पुत्री नामास्या अपि विष्णोः सदैव । इळेड्यत्वादुपजीव्यत्वतश्च स एवायुरयनाज्ज्ञानतश्च । तच्छास्यत्वाच्छासनी मानवीळा तच्छासकत्वाच्छासनी वासुदेवः । ममत्वकर्तुर्हि पितुः स पुत्रः स्वातन्त्र्यं च ममता नान्यदस्ति ॥ ११ ॥ (त्वन्नोअग्नेतव) त्वं नो मघोनो यजमानस्य तन्वस्तवैव रक्षाशक्तिभी रक्ष देव । चशब्देन ज्ञानभक्त्यादिकं च सदास्माकं यजमानस्य चाद्धा । त्राता तोकस्य पुत्रस्य च त्वं सन्ततित्वात्तनयस्यास्य सूनोः । गवां च त्वं रक्षिता-

त्वं नो अग्ने पित्रोरुपस्थ आ देवो देवेष्वनवद्य जागृविः ।
तनूकृद्बोधि प्रमतिश्च कारवे त्वं कल्याण वसु विश्वमोपिषे ९
त्वमग्ने प्रमतिस्त्वं पितासि नस्त्वं वयस्कृत्तव जामयो वयम् ।
सं त्वा रायः शतिनः सं सहस्रिणः सुवीरं यन्ति व्रतपामदाभ्य ॥
॥ १० ॥ ३३ ॥
त्वामग्ने प्रथममायुमायवे देवा अकृण्वन् नहुषस्य विश्पतिम् ।
इळामकृण्वन्मनुषस्य शासनीं पितुर्यत्पुत्रो ममकस्य जायते ११
त्वं नो अग्ने तव देव पायुभिर्मघोनो रक्ष तन्वश्च वन्द्य ।
त्राता तोकस्य तनये गवामस्यनिमेषं रक्षमाणस्तव व्रते १२

ज्ञानसौख्यवाचां वाद्धैवानिमेषान् सुरांश्च। संरक्षमाणसस्त्वद्व्रते तैः
प्रवृत्ते ॥ १२ ॥ (त्वमग्नेयज्यवे) यज्योश्च त्वं पालको ह्यन्तरश्च ।
नितरां यः सङ्गहीनोऽनिषङ्गस्तस्मै भक्त्या दीप्यसे ज्ञानदृष्टया ।
द्विशीर्षत्वाच्चतुरक्षोऽधियज्ञो द्वे शीर्षे इति वागुत्तरत्र । यो दत्त-
हव्यस्तेऽतिसौम्याय पीत्यै कर्तुर्मन्त्रं संभजसे हि तस्य ॥ १३ ॥
(त्वमग्नउरु) महास्तोत्राय वदते स्पार्हमिष्टं रेक्णः सुखं परमं
तद्ददासि । आसमन्ताद्धारकस्यापि वायोः प्रज्ञानदः प्रोच्यसे त्वं
पिता च । प्रशास्सि त्वं परिपक्वाधिकारं प्रदेशकत्वादखिलं त्वं
सुवेत्ता ॥ १४ ॥ (त्वमग्नेप्रयत) धृतं वर्मेव परिपासि नित्यं प्रयत्नाद्यो
दक्षिणादो मखेषु । स्वादुक्षद्मा सुखगेहो गृहे च स्योनं सुखं यः
परेषां करोति । यावज्जीवं यजते सुप्रतिज्ञो भूत्वा च यो यजते तस्य
सैव । द्युप्राप्तिभावे ह्युपमा देह एव क्षमेति वा वसतिर्ज्ञानमार्गे ॥
॥ १५ ॥ ३४ ॥ (इमां) या मे भवच्छरणप्राप्तिरेषा मर्षस्व तामल्प
इति क्रुधो मा । त्वत्प्राप्त्यर्थं दूरमागां च यत्तत्प्राप्यः पिता ज्ञानदो
देवतानाम् । त्वं भ्रामको मानुषाणामृषीणां कर्ता तथा ज्ञानदानेन
देव ॥ १६ ॥ (मनुष्वत्) यथा मनुश्चाङ्गिरा वा ययातिर्गृहे प्राप्तस्त्वां
तथा मद्गृहं च । अभ्यायाह्यावह देवसङ्घमासादय बर्हिषि यक्षि च
प्रियम् । यष्टा त्वमेवाखिलजीवगो यत् ॥ १७ ॥ (एतेनाग्ने) स्पष्टत्वं
च प्राप्नुहि वेदवाचा । शक्त्या यत्ते चकृम ज्ञानतो वा वस्यो भद्रं
प्रणयास्मान्सुमत्या । भोगेतया संसृज नित्यमेव यस्माच्छक्त्या चकृम
त्वत्सुकर्म ॥ १८ ॥ ३५ ॥ ३१ ॥

(इन्द्रस्यनु) इन्द्रस्य वा वासुदेवस्य वीर्याण्याचक्षेऽहं यानि
मुख्यानि चक्रे । अहिं दैत्यं संशयं वा जघान जलानुसारेण चखान
मार्गम् । ततर्द विघ्नान्कर्मणां वाऽनुसाराद्वहनात्पक्षा वक्षणा दुर्वचांसि ।
जीवानां चेद्वक्षणा जन्मपर्ववतां बिभेदैव सुयुक्तिभिस्ताः ॥ १ ॥
(अहन्) त्वष्टा त्वेतज्ज्ञानवज्रं विरिञ्चिस्ततक्ष चै(तै ?)तद्विषयं त्विडात्मा ।
स्वर्यं वज्रं निशितं शब्दजं वा शिशुवत्सा गाव इवैतदीरिताः । अञ्जः
समुद्रं [illegible]ग्मुरापः क्रिया वा समुद्रिक्तं देवमेनं व्रजन्ति ॥ २ ॥



---

त्वमग्ने यज्यवे पायुरन्तरोऽनिषङ्गाय चतुरक्ष इध्यसे ।
यो रातहव्योऽवृकाय धायसे कीरेश्चिन्मन्त्रं मनसा वनोषि तम् १३
त्वमग्न उरुशंसाय वाघते स्पार्हं यद्रेक्णः परमं वनोषि तत् ।
आध्रस्य चित्प्रमतिरुच्यसे पिता प्र पाकं शास्सि प्र दिशो विदुष्टरः १४
त्वमग्ने प्रयतदक्षिणं नरं वर्मेव स्यूतं परि पासि विश्वतः ।
स्वादुक्षद्मा यो वसतौ स्योनकृज्जीवयाजं यजते सोपमा दिवः ॥१५॥३४॥
इमामग्ने शरणिं मीमृषो न इममध्वानं यमगाम दूरात् ।
आपिः पिता प्रमतिः सोम्यानां भृमिरस्यृषिकृन्मर्त्यानाम् १६

मनुष्वदग्ने अङ्गिरस्वदङ्गिरो ययातिवत्सदने पूर्ववच्छुचे ।
अच्छ याह्या वहा दैव्यं जनमा सादय बर्हिषि यक्षि च प्रियम् १७

एतेनाग्ने ब्रह्मणा वावृधस्व शक्ती वा यत्ते चकृमा विदा वा ।
उत प्र णेष्यभि वस्यो अस्मान्त्सं नः सृज सुमत्या वाजवत्या ॥
॥ १८ ॥ ३५ ॥ ३१ ॥

हिरण्यस्तूप आङ्गिरसः । इन्द्रः । त्रिष्टुप् ।

इन्द्रस्य नु वीर्याणि प्र वोचं यानि चकार प्रथमानि वज्री ।
अहन्नहिमन्वपस्ततर्द प्र वक्षणा अभिनत्पर्वतानाम् १

अहन्नहिं पर्वते शिश्रियाणं त्वष्टास्मै वज्रं स्वर्यं ततक्ष ।
वाश्रा इव धेनवः स्यन्दमाना अञ्जः समुद्रमव जग्मुरापः २

(वृषायमाणः) वव्रे सोमं तृषितो यद्वदेव वृषाऽपिबत्सवनेषु त्रिषु स्म ।
सवनानां कद्रुकत्वं द्रुतं यत्कमत्र सोमो ध्यानयोगे मनो वा ।
सायङ्करं लयकृज्ज्ञानमेव समाददे संशयमीशवद्वा ॥ ३ ॥ (यदिन्द्र)
अहन्नेनं प्रथमं मायिनां च व्यनाशयो व्याजरूपाश्च मायाः । ततः
सूर्यद्युदिनादेश्च कर्ता त्वमेव तावद्बलतो न शत्रुम् । लभसे माया-
वादिनां वाऽथ माया व्यनाशयः स्वजनैस्तज्जयेन ॥ ४ ॥ (अहन्वृत्रं)
अहन्वृत्रं व्यंसमतोऽधिकं च तमो मिथ्याप्रत्ययौ व्यंसनाद्वा ।
स्कन्धास्तरोर्यद्वदथो विवृक्णा अहिश्च वज्रेण कुलस्य शङ्कतेः । विद्या
नाम्ना कुलिशो बुद्धिरेव पृथिव्याख्या संशयस्तद्गतो यत् । अतः
पृथिव्या उपपृ- ॥ ५ ॥ ३६ ॥ (अयोद्धेव) ग्यस्य योद्धा ना-
योद्धाऽसौ तद्वदेवेन्द्रशत्रुः । दर्पोद्रिक्तो ह्याह्वयामास शक्रं विष्णुं वाऽ
ज्ञानं वीरतमं रिपूणाम् । महोच्चानां बाधकं दार्ढ्यहेतोर्ऋजीषाख्यं
नास्य विष्णोर्वधानाम् । संप्राप्तिमज्ञानमथापि वृत्रः शक्रस्यातारी-
त्संपिपिषे प्रजाश्च । रुजा युक्ता मानुषीर्वा स्मृतिस्था इन्द्रः शत्रुर्यस्य
स हीन्द्रशत्रुः । पुंसोः पूर्वस्मिन्स्वरितांते समासो बहुव्रीहिर्हीति सूत्रं

---

वृषायमाणोऽवृणीत सोमं त्रिकद्रुकेष्वपिबत्सुतस्य ।
आ सायकं मघवादत्त वज्रमहन्नेनं प्रथमजामहीनाम् ३
यदिन्द्राहन्प्रथमजामहीनामान्मायिनाममिनाः प्रोत मायाः ।
आत्सूर्यं जनयन्द्यामुषासं तादीत्ना शत्रुं न किला विवित्से ४
अहन्वृत्रं वृत्रतरं व्यंसमिन्द्रो वज्रेण महता वधेन ।
स्कन्धांसीव कुलिशेना विवृक्णाहिः शयत उपपृक्पृथिव्याः ॥५॥३६॥
अयोद्धेव दुर्मद आ हि जुह्वे महावीरं तुविबाधमृजीषम् ।
नातारीदस्य समृतिं वधानां सं रुजानाः पिपिष इन्द्रशत्रुः ६



पुराणम् ॥ ६ ॥ (अपात्) सञ्छिन्नपाद्बाहुरपीन्द्रमेव युयोध वज्रं
व्यसृजत्स तस्य । गिरेः सानुप्रतिमे कण्ठदेशे तर्कागमाभ्यां रहितं
तमो वा । संयुध्यमानं मानवज्रेण विष्णुर्जघान वध्रिर्वधयोग्योऽथ
नीचः । ईशस्य शत्रुर्भवितुं स इच्छन्व्यस्तोऽशयद्बहुधेशेन तेन ॥७॥
(नदन्न) अपां रोद्धारममुया स्वमात्रा सहैव शक्रेण हतं शयानम् ।
भिन्नं नदं यद्वदतीत्य चापो मनः पूर्वं चारुहाणाः प्रयान्ति । वृत्रो
याः पूर्वं स्वमहिम्ना परीत्य पुरातिष्ठत्तत्सुतोऽहिश्च तासाम् । पत्सुतश्शीः
पादतोऽनन्तरं तु शेताऽभवत्तद्वदेवाभिरुन्धन् । तमः पुत्रः संशयो
वाभिरुन्धन् शुभान्यास्ते निहतः सोऽपि तेन ॥ ८ ॥ (नीचावयाः)
नीचस्थाने बन्धनं याऽपि चापां करोति दानुर्वृत्रमाता दनुः सा ।
वृत्रो ह्यभूद्दनुजः कश्यपाच्च पापात्माऽसौ वैष्णवस्त्वष्टृजातः । वृत्रः
पुत्रोऽस्या इति सा वृत्रपुत्रा वधं तस्या आहरत्पूर्वमिन्द्रः । प्रकृतिर्वा
वृत्रमाता तमो हि तस्या अभूत्तां जघानोशिता वा । प्रातिस्विकी
प्रकृतिर्यत्तमश्च दोषाश्चान्ये पुंस्वतो युक्तमेतत् । सुतावनार्थमुपरिस्था
बभूव सुतस्य माता तां निहत्यामुमेव । जघानेन्द्रः कारणस्यापि
नाशात्कार्योत्थानं वारयामास विष्णुः । स्यादेव पूर्वं कार्यनाशो ह्यथापि
निःशेषनाशः कारणस्यैव नाशात् । एवं भक्तानतुजग्राह देवो नारायणः
पारयन् संसृतेश्च । उत्तरत्वं प्रकृतेः शक्तितः स्या- ॥ ९ ॥

---

अपादहस्तो अपृतन्यदिन्द्रमास्य वज्रमधि सानौ जघान ।
वृष्णो वध्रिः प्रतिमानं बुभूषन् पुरुत्रा वृत्रो अशयद्व्यस्तः ७
नदं न भिन्नममुया शयानं मनो रुहाणा अति यन्त्यापः ।
याश्चिद्वृत्रो महिना पर्यतिष्ठत्तासामहिः पत्सुतःशीर्बभूव ८
नीचावया अभवद्वृत्रपुत्रेन्द्रो अस्या अव वधर्जभार ।
उत्तरा सूरधरः पुत्र आसीद्दानुः शये सहवत्सा न धेनुः ९

(अतिष्ठन्तीनां) दनन्तत्वान्नैव तिष्ठन्ति काष्ठाः। अतस्तासां न गृहं किञ्चिदस्ति निण्यं सुखेनैव चरन्ति चापः। दीर्घं तमो वृत्रसंज्ञं तमो वा दीर्घमन्धं प्राप वृत्रः स एव ॥ १० ॥ ३७ ॥ (दासपत्नीः) दासस्य विष्णोर्वरुणस्य पत्न्यो निरुद्धा आसन्नहिना यद्वदेव। गावो बलेनेन्द्रयज्ञे सुक्लृप्ता वृत्रं हत्वा तमहिञ्चाशु शक्रः। उद्घाटयामास बिलं तदापां शुभद्वारं भगवान्वा तमो घ्नन् ॥ ११ ॥ (अश्व्योवारः) सृके युद्धे प्रत्यहंस्त्वां यदि स्म देवः प्रधानोऽपि तदश्ववारः। वालीव त्वं ननु देवस्तदानीं प्रतिहन्ता तेनैव कश्चिद्धि तस्मात्। अजयो बलाद्गा अजयो हिरण्यं सोमं गन्तुमसृजः सप्तसिन्धून् ॥ १२ ॥ (नास्मै) अशनियाः विद्युतं यां मिहं च नाम्ना हेतिं वैद्युपमां सुतीक्ष्णाम्। अशनिभेदं ह्रादुनिनामधेयं त्वामुद्दिश्यैवाऽकिरत्सोऽहिरुग्रः। त्वां प्रत्येतन्नैव सिद्धिं चकार पश्चात्काले त्वजयस्त्वं तमेव ॥१३॥ (अहेर्यातारं) अहेर्योद्धारं कमपश्य इन्द्र यज्ञघ्नुषस्तेऽपि भयं जगाम। ज्ञानानि मिथ्याबोधतोऽस्मन्मनश्च शब्दादिकादसृजः सप्तसिन्धून्।

---

अतिष्ठन्तीनामनिवेशनानां काष्ठानां मध्ये निहितं शरीरम्।
वृत्रस्य निण्यं वि चरन्त्यापो दीर्घं तम आशयदिन्द्रशत्रुः ॥ १० ॥ ३७ ॥

दासपत्नीरहिगोपा अतिष्ठन्निरुद्धा आपः पणिनेव गावः।
अपां बिलमपिहितं यदासीद्वृत्रं जघन्वाँ अप तद्ववार ११
अश्व्यो वारो अभवस्तदिन्द्र सृके यत्त्वा प्रत्यहन्देव एकः।
अजयो गा अजयः शूर सोममवासृजः सर्तवे सप्त सिन्धून् १२
नास्मै विद्युन्न तन्यतुः सिषेध न यां मिहमकिरद्ध्रादुनिं च।
इन्द्रश्च यद्युयुधाते अहिश्चोतापरीभ्यो मघवा वि जिग्ये १३
अहेर्यातारं कमपश्य इन्द्र हृदि यत्ते जघ्नुषो भीरगच्छत्।
नव च यन्नवतिं च स्रवन्तीः श्येनो न भीतो अतरो रजांसि १४



महत्तत्त्वादीन्विपरीता मतिस्तु विद्युच्छब्दास्तन्यतुर्वक्तृशक्तिः। मिहेत्युक्ता ह्रादुनिर्हुङ्कृतिश्च प्रतिवक्तॄणामनुकूले रमेशे। न साधयन्ति स्म तमस्समुत्था जयत्येनं संशयं वासुदेवः। स्वभक्तार्थे तद्धृदिस्थः क एव त्वदन्योऽहेरभिगन्ता भवेत। तवैव यस्मात्संशयं जघ्नुषस्तु त्वदीयानां भयमज्ञो व्यपैति। शतमेकोनमतरस्त्वं नदीनामहिं दैत्यं घ्नन्यथाऽकाशदेशात्। भीतः श्येनो ह्यतिगच्छेत्तथैव नानानदीवारकत्वात्तु तस्य। ईशो देवानां तावतां तावतीश्च सृत्यापगास्तारयामास यद्वत्। भीतः श्येनस्तरतीत्थं तथैषां कृत्वोपमां तारयामास देवः। स्वातन्त्र्ये भेदकरणे चोक्त एव व्यत्यास इत्यनवद्यं तदेतत्। वस्वादित्या मरुतश्चाश्विनौ च बृहस्पतिः शेषविपानिरुद्धाः। ब्रह्मा ब्रह्माण ऋभवश्चैव रुद्रा ऊनं शतं देवतासंहितोक्तम् ॥१४॥ (इन्द्रोयातः) स एवेन्द्रो भगवांस्तत्प्रसादात्प्राप्तो भक्तैः पर्यवसानगन्तुः। मुक्तस्य राजाऽपि शमस्य मुक्तेर्ज्ञानं शृङ्गं तद्वतश्चैव नित्यम्। स एव राजा क्षयति प्रजानां भूतान्यराणीव च पर्यभूत्सः ॥ १५ ॥ ३८ ॥ ३२ ॥

इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते श्रीमदृग्भाष्ये प्रथमाष्टके द्वितीयोऽध्यायः ॥ २ ॥

---

इन्द्रो यातोऽवसितस्य राजा शमस्य च शृङ्गिणो वज्रबाहुः।
सेदु राजा क्षयति चर्षणीनामरान्न नेमिः परि ता बभूव
॥ १५ ॥ ३८ ॥ १३ ॥ (३२) ॥

## ॥ अथ तृतीयोऽध्यायः ॥

श्रीमद्धनुमद्भीममध्वान्तर्गतरामकृष्णवेदव्यासात्मकलक्ष्मीहयग्रीवायनमः ॥ ॐ ॥ (एतायाम) ये सखायस्त्वरिता एत देवा उपायाम पशुवत्तद्वशस्थाः । गव्यन्त उक्ता अतिनिश्चितेऽर्थे भूतशब्दश्चेत्याह सूत्रं परेशः । प्रकृष्टज्ञानं वर्धयत्येव सुष्टु स नोऽभेद्योऽनामृणः क्वापि तस्य । वित्तानि तस्माद्वेदवाक्योत्थमेव केतं ज्ञानं परमावर्जते नः । ददा- ॥ १ ॥ (उपेत्) त्युपैवेशमहं पतामि यथा श्येनो वसतिं पूर्वभुक्ताम् । इन्द्रं नमस्यन्ननुकूलर्गिभरेव यः स्तोतृभ्यो हव्य एवास्ति काले ॥ २ ॥ (निसर्वसेनः) अशेषसेनापतिरेष शत्रूनशेषतोहन्तुमथो तमांसि । बध्नाति तूणान्निजसज्जनान्वा संयोजयत्यात्मनि मानबाणान् । अर्यो गम्यो धीश्वरो गा मतीर्वा सङ्कालयत्येव च यस्य वष्टि । भक्तस्य तत्त्वं ददमानस्य भूरि भद्रं मा भूरसुरस्त्वं कदाचित् । अस्मदर्थे हिंसकत्वेन नित्यं प्रवृद्ध ॥ ३ ॥ (वधीर्हि) वज्रेण घनेन दस्युम् । ज्ञानेन वा ज्ञानगणं धनाढ्यमयज्युं चाप्येक

---

॥ अथ तृतीयोऽध्यायः ॥

हिरण्यस्तूप आङ्गिरसः । इन्द्रः । त्रिष्टुप् ।

एतायामोप गव्यन्त इन्द्रमस्माकं सु प्रमतिं वावृधाति ।
अनामृणः कुविदादस्य रायो गवां केतं परमावर्जते नः १
उपेदहं धनदामप्रतीतं जुष्टां न श्येनो वसतिं पतामि ।
इन्द्रं नमस्यन्नुपमेभिरर्कैर्यः स्तोतृभ्यो हव्यो अस्ति यामन् २
नि सर्वसेन इषुधीँरसक्त समर्यो गा अजति यस्य वष्टि ।
चोष्कूयमाण इन्द्र भूरि वामं मा पणिर्भूरस्मदधि प्रवृद्ध ३
वधीर्हि दस्युं धनिनं घनेनँ एकश्चरन्नुपशाकेभिरिन्द्र ।
धनोरधि विषुणक् ते व्यायन्नयज्वानः सनकाः प्रेतिमीयुः ४



एवान्तरे च । चरंश्छाकैः शक्तिभिः सर्वदेवनरादिलोकं यमयजघन्थ । अधिकृत्य त्वां धनमत्यन्तपुष्टं विष्वग्जग्मुरयजन्तः सदैव । मृतिं प्रापुर्दुःखबाहुल्यरूपां सनका लाभे योग्यरूपा अपि स्म ॥ ४ ॥ (पराचित्) अयज्वानोऽन्ये वक्ष्यमाणास्तु ये ते सन्त्यासुरा यज्वभिः स्पर्धमानाः । शिरांस्यपि स्वानि सन्तत्यजुस्ते सद्भिः स्पर्धामात्रसम्पूरितार्थाः । तानव्रतान्स्वर्गतः खात्पृथिव्या निरधमस्त्वं स्थैर्यवानिन्द्रियेशः ॥ ५ ॥ १ ॥ (अयुयुत्सन्) यदा नवग्वा ऋषयोऽसुरेन्द्रैरुपद्रुताः शरणं वासुदेवम् । प्रापुस्तमोभिस्तामसैर्वाघसङ्घैः संपीडिता अयुयुत्संस्तदा तैः । सेनां च विष्णोर्निरयातयंस्ते वधाय तेषां हरिभक्त्यादिकान्वा । गुणान्समर्था इव योधाः स्वशत्रुवधैकशीला अपि नष्टाः प्लवद्भिः । गुणैर्विष्णोः स्वैर्गुणैर्वा प्रसादादीशस्य संकालयन्तो ऽगच्छन् ॥ ६ ॥ (त्वमेतान्) रक्षोगणान्भक्षयतो मुनींश्च संपीडिता- ...तश्च त्वयैव । अयोधयो रजसोऽन्ते सुसत्त्ववृधिर्यदा जगतः ...तदैव । पुंदोषान्वा गुणभक्षान्नृसत्त्ववृद्धौ दिवो ज्ञानतोऽवादहश्च । अज्ञानदस्युं स्तुवतः संस्तुतिं च प्रावो रक्षो ॥ ७ ॥ (चक्राणासः) बन्धनं ये जनानां । कुर्वन्ति हेम्ना मणिभिश्शोभमाना दैत्यादयो

---

परा चिच्छीर्षा ववृजुस्त इन्द्रायज्वानो यज्वभिः स्पर्धमानाः ।
प्र यद्दिवो हरिवः स्थातरुग्र निरव्रताँ अधमो रोदस्योः ॥ ५ ॥ १ ॥
अयुयुत्सन्ननवद्यस्य सेनामयातयन्त क्षितयो नवग्वाः ।
वृषायुधो न वध्रयो निरष्टाः प्रवद्भिरिन्द्राच्चितयन्त आयन् ६
त्वमेतान्रुदतो जक्षतश्चायोधयो रजस इन्द्र पारे ।
अवादहो दिव आ दस्युमुच्चा प सुन्वतः स्तुवतः शंसमावः ७
चक्राणासः परीणहं पृथिव्या हिरण्येन मणिना शुम्भमानाः ।
न हिन्वानासस्तितिरुस्त इन्द्रं परि स्पशो अदधात्सूर्येण ८

दृढदोषा धनैर्वा । ते प्रेरयन्तोऽपि परस्परेण नैवातरन्वासुदेवं कथञ्चित् । सहैव सूर्येण च देवसङ्घांश्चरानज्ञातानदधाद्वासुदेवः । दैत्यानां वा तमसां वृत्तदृष्टचै ॥ ८ ॥ (परियत्) पर्यभुङ्क्थाः सह यद्रोदसी च । स्वमहिम्ना विश्वतः सम्यगेव त्वदभक्तान्निरधमो भक्त-सङ्घैः ॥ ९ ॥ (नयेदिवः) ये दस्यवो द्युपृथिव्योरशेषभोगेच्छवो धनदं चेश्वरं तं । जिगीषवः स्वीयमायाभिरेव नैवोदापुर्द्वयमेतत्कदा-चित् । युक्तं ज्ञानं वज्रमेवायुधं वा दस्यून्हन्तुं कृतवान्देवदेवः । निजेनैव ज्योतिषा भक्तहृद्गतमोगूढान्यदुहन्निश्चयेन । ज्ञानानि विष्णु-र्यत्तदज्ञानमुग्रं ॥ १० ॥ २ ॥ (अनुस्वधां) यस्य कर्माण्यक्षरन्सौख्य-मेव । यो वेदवाचां सृतिनावात्मकानां मध्येऽवर्धदयथाज्ञानरूपः । समीचीनज्ञानतोऽहंस्तमीश ओजिष्ठेन (हे)हतिरूपेण सम्यक् । मोक्ष-प्रकाशार्थमथापि नाव्या तरणीयानां मध्यतोऽपां वृधं तम् । अहिं वा ॥ ११ ॥ (न्याविध्यत्) इळिनो भूस्थिताः स्युस्तत्राविशन्नसुरो नाम तस्य । इळीबिशस्तस्य दृढानि यानि बलादीनि न्यहनत्तानि देवः । तमसो वा शृङ्गिणं शोषकं च वृषरूपं दैत्यमहन्नथो वा । कामं यावच्छक्तितो विक्रमाद्वा वेगेन वा शत्रुमथो पृतन्युम् । जघन्थ

परि यदिन्द्र रोदसी उभे अबुभोजीर्महिना विश्वतः सीम् ।
अमन्यमानाँ अभि मन्यमानैर्निर्ब्रह्मभिरधमो दस्युमिन्द्र ९
न ये दिवः पृथिव्या अन्तमापुर्न मायाभिर्धनदां पर्यभूवन् ।
युजं वज्रं वृषभश्चक्र इन्द्रो निर्ज्योतिषा तमसो गा अदुक्षत् ॥१०॥२॥
अनु स्वधामक्षरन्नापो अस्याऽवर्धत मध्य आ नाव्यानाम् ।
सध्रीचीनेन मनसा तमिन्द्र ओजिष्ठेन हन्मनाहन्नभि द्यून् ११
न्याविध्यदिलीबिशस्य दृळ्हा वि शृङ्गिणमभिनच्छुष्णमिन्द्रः ।
यावत्तरो मघवन्यावदोजो वज्रेण शत्रुमवधीः पृतन्युम् १२



वज्रेण सुबोधतो वा न शक्तिसामस्त्यमिहोदितं हरेः । अनन्तशक्तिर्हि हरिः सदैव कुत एव शत्रुस्तदमुष्य कोऽपि । अतो यथाशक्त्यभि-युध्यमानं शत्रुं जघन्थेति महानिहार्थः ॥ १२ ॥ (अभिसिध्मः) स सर्वतः सिद्धियुतः सदैव जिगाय जीवारिगणान्पुरश्च । संसाररूपा अभिनद्वृषेण प्राणेन तिग्मेन विरोधिनः प्रति । संयोजयामास वज्रेण वृत्रं ज्ञानेन वा ज्ञानममुष्य हत्यै । मतिं च स्वामदिशत्स्वप्रजाभ्यः स शाशदानः सुसुखी सदैव ॥ १३ ॥ (आवःकुत्सं) कुत्सं दशद्युं च मुनिं नृपं च यस्मिन्स्थितः स्वात्मरूपं सुभक्त्या । अदर्शयस्तोषितो यः स्वतन्त्रश्चाकन्नुकः कर्म यतः स्वतन्त्रे । वृषरूपस्यास्य नृपस्य युध्यतः शफच्युतो रेणुरुन्नक्षतद्याम् । श्वेता वाणी वायुभार्या सुतोऽस्याः श्वैत्रेयोऽयं युध्यतो ह्युदस्थात् । वृषः श्वैत्रेयो धर्म एवाथ कुत्सना-माध्यात्मे कुत्सितोत्सारणात्स्यात् । धर्मरेणुः स्वर्गमात्राभिगामी साक्षा-द्धर्मो मोक्षफलोपगः स्यात् ॥ १४ ॥ (आवश्शमं) शमात्मकं वृषभं धर्ममेवाप्यरक्षस्त्वं तुग्रियास्वप्यधीश । तुग्रयाख्या स्यात्सन्ततिर्दीर्घ-काला मुक्तिक्षेत्रं विजयायैव धर्मम् । श्वेतासुतं रमणाद्रेफउक्तस्तमक्षरस्त्वं त्वयि ये तस्थिवांसः । ज्योतिश्चक्रं निजरूपं विमुक्त्या ज्ञानान्यरीणा-मधराणि चाकरोः ॥ १५ ॥ ३ ॥ १ ॥ (३३) ॥

अभि सिध्मो अजिगादस्य शत्रून् वि तिग्मेन वृषभेणा पुरोऽभेत् ।
सं वज्रेणासृजद्वृत्रमिन्द्रः प्र स्वां मतिमतिरच्छाशदानः १३
आवः कुत्समिन्द्र यस्मिञ्चाकन्प्रावो युध्यन्तं वृषभं दशद्युम् ।
शफच्युतो रेणुर्नक्षत द्यामुच्छ्वैत्रेयो नृषाह्याय तस्थौ १४
आवः शमं वृषभं तुग्र्यासु क्षेत्रजेषे मघवञ्छ्वित्र्यं गाम् ।
ज्योक्चिदत्र तस्थिवांसो अक्रञ्छत्रूयतामधरा वेदनाकः
॥ १५ ॥ ३ ॥ १ ॥ (३३) ॥

(त्रिश्चित्) आरभ्य चाद्यैव दिवा निशायां तदन्तरे च त्रिरपि स्म सर्वदा । अस्माकमेव भवतं यतोऽन्यो वेत्ता न तावित्युदितौ नवेदसौ । गौणं तदन्यत्र हरौ तु मुख्यतो व्यापी तु मार्गो युवयोस्तु दानम् । अशेषदेशेषु गतेरशेषदातृत्वतश्चैव युवोर्हि यन्त्रम् । वासो-यन्त्रं यद्वदयत्नतः स्याद्धिम्याहिनोतेस्तं तु विक्षेपणीहि । तद्वद्बुद्धि-प्रेरकाऽयत्नतो वा मायार्थसेनौ भवतं मनीषिभिः । सहैव देवैः ॥१॥ (त्रयः) पवयश्चायुधानि सोमस्य पानं चेतनत्वाद्विदुस्ते । वज्रः खड्गः शर इत्यायुधानि त्रिवेणवः स्तम्भनामान एव । दिवानिशायां त्रिस्त्रि-रेवानुयाथः कर्मारम्भार्थं लोकसिद्ध्यर्थमञ्जः । चक्रं गदा शर इत्यायुधानि वेदास्त्रयो वासुदेवस्य च स्युः । रथः स्वीयो ज्ञानिनां वा शरीरं प्राणादयः स्तम्भनान्यस्य चापि ॥ २ ॥ (समाने) वैषम्यहीने सुख-भाजनेऽह्नि विमुक्तिकालेऽखिलदोषनाशकौ । स्वभक्तानां शोधयन्तं च यज्ञं त्रिरस्माकं युद्धजिता इषश्च । सुखानि वा मोक्षगतानि नोऽलमहोरात्रं क्षरतं सर्वदैव ॥ ३ ॥ (त्रिर्वर्तिः) यद्वर्तनं सर्वलोकेषु तच्च त्रिकालगं युवयोरेव सर्वम् । भक्ते जने सुष्ठु रक्ष्ये सुभक्ते त्रिधेव कालानुगते सुशिक्षितम् । सुखं वहेतं च युवां तु नः सदा पुष्टिं च नित्यां क्षरतं वर्णवच्च ॥ ४ ॥ (त्रिर्नोरयिं) वित्तं च नित्यं देवततिं च नित्यं धियं च शुभ्रां नित्यमेवावतं नः । कीर्तिं सौभाग्यं रक्षतं नः सदैव कालत्रये युष्मदीयं रथं च । पुत्री सूर्यस्यारुहद्भक्तदेहे ज्ञानोदयो वा भगवत्प्रसादात् ॥५॥ (त्रिर्नोअश्विना) सर्वेषु कालेष्वपि भेषजानि नः सर्वलोकप्रभवानि दत्तम् । अद्भ्यः सुखायैव सुखं ममैव स्वल्पस्य युष्मत्पुत्रकस्याथ दत्तम् । पती शुभस्याथ सुतस्य शंयो-र्मदीयस्यैवावहतं सुखं वा ॥ ६ ॥ ४ ॥ (त्रिर्नोअश्विनायजता ॥७॥ त्रिरश्विना ॥ ८ ॥ क्व ॥ ९ ॥ आनासत्यागच्छतं ॥ १० ॥ आना-सत्यात्रिभिः ॥११॥ आनोअश्विना ॥ १२) ॥ ५ ॥ २ ॥ (३४) ॥

---

हिरण्यस्तूप आङ्गिरसः । अश्विनौ । जगती ; ९, १२ त्रिष्टुप् ।

त्रिश्चिन्नो अद्या भवतं नवेदसा विभुर्वां याम उत रातिरश्विना ।
युवोर्हि यन्त्रं हिम्येव वाससोऽभ्यायंसेन्या भवतं मनीषिभिः १
त्रयः पवयो मधुवाहने रथे सोमस्य वेनामनु विश्व इद्विदुः ।
त्रयः स्कम्भासः स्कभितास आरभे त्रिर्नक्तं याथस्त्रिर्वश्विना दिवा २
समाने अहन् त्रिरवद्यगोहना त्रिरद्य यज्ञं मधुना मिमिक्षतम् ।
त्रिर्वाजवतीरिषो अश्विना युवं दोषा अस्मभ्यमुषसश्च पिन्वतम् ३
त्रिर्वर्तियातं त्रिरनुव्रते जने त्रिः सुप्राव्ये त्रेधेव शिक्षतम् ।
त्रिर्नान्द्यं वहतमश्विना युवं त्रिः पृक्षो अस्मे अक्षरेव पिन्वतम् ४
त्रिर्नो रयिं वहतमश्विना युवं त्रिर्देवताता त्रिरुतावतं धियः ।
त्रिः सौभगत्वं त्रिरुत श्रवांसि नस्त्रिष्ठं वां सूरे दुहिता रुहद्रथम् ५
त्रिर्नो अश्विना दिव्यानि भेषजा त्रिः पार्थिवानि त्रिरु दत्तमद्भ्यः ।
ओमानं शंयोर्ममकाय सूनवे त्रिधातु शर्म वहतं शुभस्पती ॥ ६ ॥ ४ ॥
त्रिर्नो अश्विना यजता दिवेदिवे परि त्रिधातु पृथिवीमशायतम् ।
तिस्रो नासत्या रथ्या परावत आत्मेव वातः स्वसराणि गच्छतम् ७
त्रिरश्विना सिन्धुभिः सप्तमातृभिस्त्रय आहावास्त्रेधा हविष्कृतम् ।
तिस्रः पृथिवीरुपरि प्रवा दिवो नाकं रक्षेथे द्युभिरक्तुभिर्हितम् ८
क्व त्री चक्रा त्रिवृतो रथस्य क्व त्रयो वन्धुरो ये सनीळाः ।
कदा योगो वाजिनो रासभस्य येन यज्ञं नासत्योपयाथः ९
आ नासत्या गच्छतं हूयते हविर्मध्वः पिबतं मधुपेभिरासभिः ।
युवोर्हि पूर्वं सवितोषसो रथमृताय चित्रं घृतवन्तमिष्यति १०
आ नासत्या त्रिभिरेकादशैरिह देवेभिर्यातं मधुपेयमश्विना ।
प्रायुस्तारिष्टं नी रपांसि मृक्षतं सेधतं द्वेषो भवतं सचाभुवा ११
आ नो अश्विना त्रिवृता रथेनाऽर्वाञ्चं रयिं वहतं सुवीरम् ।
शृण्वन्ता वामवसे जोहवीमि वृधे च नो भवतं वाजसातौ
॥ १२ ॥ ५ ॥ २ ॥ (३४) ॥

(ह्वयाम्यग्निं) ह्वयामि देवानग्निपूर्वानथो वा विष्णुं तैस्तैर्नामभी राति यस्मात्। रतित्वाद्वा रतिदत्वात्स रात्री ॥ १ ॥ (आकृष्णेन) कृष्णं रजः शार्वरं हृत्तमो वा। देवान्नृजातानथवा विमुक्तानन्यान्मर्त्यान्सृतिगान्वा लयेषु। निशासु वा स्वात्मनि संनिवेशयन्प्रस्वापयन्वा रविगो जनार्दनः ॥ २ ॥ (यातिदेवः) आयाति नित्यं चोच्चनीचैः प्रदेशैः शुभ्राश्वयुक्तेन रथेन याज्यः। शुभ्रौ च तौ रमणीयौ च शुभ्रौ पुरोगाश्वौ हरिदश्वो हि सूर्यः। परावतो दूरतो ॥ ३ ॥ (अभीवृतं) ऽभीवृतश्च रथो हिरण्यैस्तस्य शम्या युगाणी। तमःप्रकाशौ यदधीनौ यतस्तौ दधान इत्युच्यते वासुदेवः। कृष्णं रजस्तविषी सत्त्वपूर्वा गुणास्त्रयो व्युत्क्रमात् ॥ ४ ॥ (विजनान्) तत्तुरंगाः। श्यावाः श्यामत्वान्नीलपादो जगत्ते पश्यन्ति सन्धिः प्रउगं रथस्य। देवप्रियत्वाद्दैव्यनाम्नो हरेस्तु समीपस्थं सर्वगत्वाज्जगद्धि ॥ ५ ॥

हिरण्यस्तूप आङ्गिरसः। १ (पादानां क्रमेण) अग्निः, मित्रावरुणौ, रात्रिः, सविता च। २-११ सविता। त्रिष्टुप्, १, ९ जगती,।

ह्वयाम्यग्निं प्रथमं स्वस्तये ह्वयामि मित्रावरुणाविहावसे।
ह्वयामि रात्रीं जगतो निवेशनीं ह्वयामि देवं सवितारमूतये १
आ कृष्णेन रजसा वर्तमानो निवेशयन्नमृतं मर्त्यं च।
हिरण्ययेन सविता रथेना देवो याति भुवनानि पश्यन् २
याति देवः प्रवता यात्युद्वता याति शुभ्राभ्यां यजतो हरिभ्याम्।
आ देवो याति सविता परावतोऽप विश्वा दुरिता बाधमानः ३
अभीवृतं कृशनैर्विश्वरूपं हिरण्यशम्यं यजतो बृहन्तम्।
आस्थाद्रथं सविता चित्रभानुः कृष्णा रजांसि तविषीं दधानः ४
वि जनाञ्छ्यावाः शितिपादो अख्यन्रथं हिरण्यप्रउगं वहन्तः।
शश्वद्विशः सवितुर्दैव्यस्योपस्थे विश्वा भुवनानि तस्थुः ५



(तिस्रोद्यावः) तिस्रो द्यावो मात्रयं द्वाउपस्थौ जडाजडे श्रीर्विराषाडधीश। विश्वस्य साक्षाद्भगवान्नियन्ता यमोऽस्य सर्वं गदितं सदैव। जडाजडत्वान्नान्यमुक्तं पृथग्घि सर्वस्वाम्यं वक्तुमेवोदिता श्रीः। अन्योन्यसंबन्धविवक्षयैव ह्युपस्थत्वं मुक्तभूतानि यानि। अशेषतस्तानि रथस्य यद्वदाणिं रथ्यं संश्रितं सर्वदैव। एवं हरिं संश्रितान्यब्जजेशपूर्वाण्यपीत्येष वेदार्थसारः। इह ब्रवीत्वन्यथा योऽभिपश्येत्कुर्याद्वा तद्यो यथावच्च पश्येत्। शेषं ज्ञानं स ब्रवीत्वस्मदर्थे चकार यो विष्णुरेतत्स वा नः ॥ ६ ॥ ६ ॥ (विसुपर्णः)। गम्भीरवेगो भगवान्वा सुपर्णः परानन्दादन्तरिक्षाण्यपश्यत्। असौ रतिः शुभनीतिश्च विष्णुरित्यपश्यद्दुर्लभत्वात्क एव। पश्यन्रवेरश्मिगणानपीह सर्वव्याप्तानपि विष्णोर्न रश्मीन्। लोकः पश्येदिति कुत्राततानेत्याक्षिप्यते व्यक्तिमपेक्ष्य रश्मेः ॥ ७ ॥ (अष्टौ) ऊर्ध्वं मध्यमधरं चेति धन्वत्रयं तमः खलीनं यतस्तत्। युक्तं भवेत्तद्गतैः सर्वदैव दृढश्लेषाद्योजनं स्यात्तमो हि। अष्टौ दिशः प्रकृतेर्वा पृथिव्या महदाद्याः सिन्धवस्तान्यपश्यत्। हिरण्याक्षो नरसिंहात्मना स वार्याणि यद्वरणीयं सुवित्तम् ॥ ८ ॥ (हिरण्यपाणिः) चर्षणिभ्यो यत्प्रजाभ्यो विशिष्टो



तिस्रो द्यावः सवितुर्द्वा उपस्थाँ एका यमस्य भुवने विराषाट्।
आणिं न रथ्यममृताधि तस्थुरिह ब्रवीतु य उ तच्चिकेतत् ॥ ६ ॥ ६ ॥
वि सुपर्णो अन्तरिक्षाण्यख्यद्गभीरवेपा असुरः सुनीथः।
क्वेदानीं सूर्यः कश्चिकेत कतमां द्यां रश्मिरस्या ततान ७
अष्टौ व्यख्यत्ककुभः पृथिव्यास्त्री धन्व योजना सप्त सिन्धून्।
हिरण्याक्षः सविता देव आगाद्दधद्रत्ना दाशुषे वार्याणि ८
हिरण्यपाणिः सविता विचर्षणिरुभे द्यावापृथिवी अन्तरीयते।
अपामीवां बाधते वेति सूर्यमभि कृष्णेन रजसा द्यामृणोति ९

विचर्षणिः केशवः सूर्यमेति । ऋणोति सम्पूरयति ॥ ९ ॥ (हिरण्यहस्तः) स्ववान्स स्वतन्त्रत्वात्स्वर्णपात्रं सुपूर्णम् । दधानोऽसौ स्वर्णवर्णश्च तेन स्वर्णपाणिः स्वर्णहस्तश्च देवः । पृथक्पृथक्पाणिपूर्वाङ्गवित्त्यै स्वर्णवर्णः स्वर्णपाणिः स उक्तः । एतैर्लिङ्गैर्वेत्ति सूर्यं यतश्च सूर्यादन्यः सविता वासुदेवः । उक्तो गायत्र्या चारणैस्तत्रतत्र कप्यास पद्माक्ष—इति ह्युदाख्यः ॥ १० ॥ (येते) ये पन्थानो देवयाना अमुत्र साध्या ये ते रेणवो रागतो वा । रजो हानादथवा तान्प्रदाय रक्षाधिकान्ब्रूहि नोऽथो समेभ्यः ॥११॥७॥३॥(३५)॥७॥

कण्वस्त्वध्यापयन्विष्णोरनुग्रहमथाप्नुवन् । इच्छंश्च ज्ञानविततिं देवांस्तुष्टाव भक्तितः । ऋक्शतेनावशिष्टं च जप्यस्यान्ते तु कालतः । शृण्वन्तु स्तोममित्यन्ता ददर्शैकाग्रमानसः ॥छ॥ (प्रवः) बह्वाधेयत्वतः पुत्रं बहूनां वो हुताशनम् । बहुज्ञेयत्वतो विष्णुं वेमहे हे प्रजाः सदा । देवज्ञानाद्वा यजनाद्देवयत्यः समीळते । यमन्ये च जनास्सन्तः ॥१॥

---

हिरण्यहस्तो असुरः सुनीथः सुमृळीकः स्ववाँ यात्वर्वाङ् ।
अपसेधन्रक्षसो यातुधानानस्थाद्देवः प्रतिदोषं गृणानः १०
ये ते पन्थाः सवितः पूर्व्यासोऽरेणवः सुकृता अन्तरिक्षे ।
तेभिर्नो अद्य पथिभिः सुगेभी रक्षा च नो अधि च ब्रूहि देव
॥ ११ ॥ ७ ॥ ३ ॥ (३५) ॥ ७ ॥

कण्वो घौरः । अग्निः, १३-१४ यूपो वा । प्रगाथः=विषमा बृहत्यः, समाः सतोबृहत्यः (१३ उपरिष्टाद्बृहती । ऐ०ब्रा० २।२ चरणच्छेदः)

प्र वो यह्वं पुरूणां विशां देवयतीनाम् ।
अग्निं सूक्तेभिर्वचोभिरीमहे यं सीमिदन्य ईळते १



(जनासः) सहसा वायुनैधितम् । धारयन्ति जनास्तस्य कर्म कुर्मो वयं च ते । सन्त्यः सम्यक्त्वतो विष्णुर्वायोरपि विवृद्धिकृत् ॥ २ ॥ (प्रत्वा ॥ ३ ॥ देवासः) प्रततेः पुरातनत्वाद्वा प्रत्नो ॥ ४ ॥ (मन्द्रः) मन्द्रो महामखः ॥ ५ ॥ ८ ॥ (त्वेइत्) देवान्सुवीर्याद्यजसि ॥ ६ ॥ (तङ्घ) तं हि त्वामेव सर्वदा । उपासते नमस्यन्तः सन्तस्तीर्णास्तु संसृतेः । स्त्रिधो ह्यति तितिर्वांसस्तीर्णदुःखा इहैव वा । त्वत्प्रसादेन विद्वांसः प्राप्य ब्राह्मण्यमुत्तमम् ॥ ७ ॥ (घ्नन्तः) तमो घ्नन्तोऽतरल्लोकानपः कर्माणि चोत्तमाः । उरु ब्रह्म क्षितित्वेन चक्रुस्तत्रैव

---

जनासो अग्निं दधिरे सहोवृधं हविष्मन्तो विधेम ते ।
स त्वं नो अद्य सुमना इहाविता भवा वाजेषु सन्त्य २
प्र त्वा दूतं वृणीमहे होतारं विश्ववेदसम् ।
महस्ते सतो वि चरन्त्यर्चयो दिवि स्पृशन्ति भानवः ३
देवासस्त्वा वरुणो मित्रो अर्यमा सं दूतं प्रत्नमिन्धते ।
विश्वं सो अग्ने जयति त्वया धनं यस्ते ददाश मर्त्यः ४
मन्द्रो होता गृहपतिरग्ने दूतो विशामसि ।
त्वे विश्वा संगतानि व्रता ध्रुवा यानि देवा अकृण्वत ॥ ५ ॥ ८ ॥

त्वे इदग्ने सुभगे यविष्ठ्य विश्वमा हूयते हविः ।
स त्वं नो अद्य सुमना उतापरं यक्षि देवान्त्सुवीर्या ६
तं घेमित्था नमस्विन उप स्वराजमासते ।
होत्राभिरग्निं मनुषः समिन्धते तितिर्वांसो अति स्त्रिधः ७
घ्नन्तो वृत्रमतरन्रोदसी अप उरु क्षयाय चक्रिरे ।
भुवत्कण्वे वृषा द्युम्न्याहुतः क्रन्ददश्वो गविष्टिषु ८

संस्थितेः । वृषा स भगवान्विष्णुर्मुनौ कण्वेऽभवत्स्थितः । क्रन्द-दश्वस्वरूपश्च ज्ञानस्यान्वेषणे कृते । ततः कण्वान्निस्सरन्ति शुद्धा वेदानुगा गिरः । द्युतिमत्त्वात्स तु द्युम्नी ॥ ८ ॥ (संसीदस्व) देवेषु ज्ञानवत्तमः । स त्वं शोचस्व दीप्यस्व धूमः संसारधूत्कृतेः । अरुषो रोषहीनत्वाद्धूमश्चेच्छुभगन्धनात् ॥ ९ ॥ (यन्त्वादेवासः ॥१०॥९॥ यमग्निं) यं सुतो मे समीधेऽग्निं मेध्यातिथिऋतादधि । उक्त्वा सत्यां वेदवाचं देयान्यन्नानि तस्य हि । तं प्रतीमा ऋचः सर्वाः प्रकाशाद्वर्धयाम तं । इन्धनं तु हरेर्नान्यत्कचिदस्ति प्रकाशनात् ॥ ११ ॥ (रायः) वित्तानि पूरयास्माकं देवेष्वप्याप्यमस्ति ते । यज्ञभागादिपूज्यत्वात्स्वधावः सुखवर्धकः । श्रुत्यवाजो यज्ञभागो राजा भवसि तस्य हि ॥ १२ ॥ (ऊर्ध्वः) अस्मद्रक्षाकृते नित्यं सूद्यतो भव विष्णुवत् । विष्णुश्चेत्स्वात्मदृष्टान्तो नोऽन्नदाता तथोद्यमी ।

---

सं सीदस्व महाँ असि शोचस्व देववीतमः ।
वि धूममग्ने अरुषं मियेध्य सृज प्रशस्त दर्शतम् ९

यं त्वा देवासो मनवे दधुरिह यजिष्ठं हव्यवाहन ।
यं कण्वो मेध्यातिथिर्धनस्पृतं यं वृषा यमुपस्तुतः ॥ १० ॥ ९ ॥

यमग्निं मेध्यातिथिः कण्व ईध ऋतादधि ।
तस्य प्रेषो दीदियुस्तमिमा ऋचस्तमग्निं वर्धयामसि ११

रायस्पूर्धि स्वधावोऽस्ति हि तेऽग्ने देवेष्वाप्यम् ।
त्वं वाजस्य श्रुत्यस्य राजसि स नो मृळ महाँ असि १२

ऊर्ध्व ऊ षु ण ऊतये तिष्ठा देवो न सविता ।
ऊर्ध्वो वाजस्य सनिता यदञ्जिभिर्वाघद्भिर्विह्वयामहे १३



यत्स्तुवद्भिर्द्विजैर्युक्ताः स्नेहैस्त्वां विह्वयामहे ॥१३॥ (ऊर्ध्वोनः) ज्ञानेन पाहि नितरामुद्यम्युच्चगुणोऽपि नः । असुरा अत्रयः प्रोक्ता मार्गत्रयविवर्जिताः । स्वर्गापवर्गमानुष्यं त्यक्त्वा यान्ति तमो हि ते । अदन्तीत्यथ रक्षांसि वात्रयोऽधिकभक्षणात् । भोगाय जीवनायापि स्वलोकचरणाय च । उत्तमान्कुरु नो नित्यं दोहनानि च लम्भय । देवेभ्योऽखिलकाम्यानि सदानोऽतिमहान्ति च ॥१४॥ (पाहि) अरं छिद्रं प्रापयतीत्यरा वा पापपूरुषः । धूत्कृतेस्तस्य नो रक्ष नश्यतोऽस्मद्वधाय च । यवीयस्सु स्थितत्वेन यविष्ठ्यो हरिरुच्यते । ब्रह्माद्यपेक्षया नित्यं यविष्ठतम एव यत् । अग्निर्यविष्ठ्य इत्युक्तो यदाधिक्यार्थतोऽधिकम् ॥ १५ ॥ १० ॥ (घनेव) वायुर्मेघानिव जहि सर्वतः पापपूरुषान् । अस्मद्द्रोही च यस्तं च तापेनैवात्ति यत्ततः । तपुर्जम्भः शिशीते यस्तीक्ष्णो भवति सर्वदा । नेशो भवतु सोऽस्माकं दुरात्मा पापूरुषः ॥ १६ ॥ (अग्निर्वव्ने) सुवीर्यं सौभगं चैव ममेशः समभाजयत् । मेध्यातिथिं सुतं चैव मित्राणि च ररक्ष मे । उपस्तुतं



---

ऊर्ध्वो नः पाह्यंहसो नि केतुना विश्वं समत्रिणं दह ।
कृधी न ऊर्ध्वाञ्चरथाय जीवसे विदा देवेषु नो दुवः १४

पाहि नो अग्ने रक्षसः पाहि धूर्तेरराव्णः ।
पाहि रीषत उत वा जिघांसतो बृहद्भानो यविष्ठ्य ॥ १५ ॥ १० ॥

घनेव विष्वग्वि जह्यराव्णस्तपुर्जम्भ यो अस्मध्रुक् ।
यो मर्त्यः शिशीते अत्यक्तुभिर्मा नः स रिपुरीशत १६

अग्निर्वव्ने सुवीर्यमग्निः कण्वाय सौभगम् ।
अग्निः प्रावन्मित्रोत मेध्यातिथिमग्निः साता उपस्तुतम् १७

चैव मुनिं सातौ लाभे ररक्ष ह ॥ १७ ॥ (अग्निना) तुर्वशादींस्तथा राज्ञो वयं तेन हवामहे। तुरोऽपि यद्वशो विष्णुः स च तुर्वशनामवान्। यदस्ति तत उच्चत्वाद्यदुरुग्रो सुरान्प्रति। तमेव तत्प्रासादेन ह्वयामो नयदेव सः। नववास्त्वादिकान्राज्ञो बलं दस्यु विनिग्रहे ॥ १८ ॥ (नित्वां) मनुष्यः सन्नहं त्वां तु ज्योतिर्मुक्तजनाय च। निदधे हृदि सत्त्वं च दीप्यसे मयि सर्वदा। ब्रह्मजोऽग्निर्ऋताद्वेदवाचोऽभिव्यज्यते हरिः। उक्षितः स्वगुणैः सर्वैर्युक्तो ॥ १९ ॥ (त्वेषासः) ऽमेयाश्च शक्तयः। त्वेषा इत्युदितास्तस्य हरेरश्मय एव च। भीमा न प्रतिगन्तुं च शक्या राक्षसपक्षिणः। यावतो जङ्गमास्तेषां हिंसनावांस्तु राक्षसः। यातुमावानितिप्रोक्तो यातनानुभवात्कचित्। यातुरित्येव च प्रोक्तः सन्तं प्रत्यनुकूलतः। स्थितास्ताः शक्तयो विष्णोः ॥२०॥ ॥ ११ ॥ ४ ॥ (३६) ॥

(क्रीळंवः) क्रीडाशीलं च मारुतम्। शर्धः सुखबलाढ्यं वाप्यनर्वाणमनिन्द्रियम्। न वायोरिन्द्रियाणां हि देवाः सन्त्यभिमानिनः। अतोऽनिन्द्रियता तस्य रथे देहे शुभश्च सः। कण्वास्तं गायताभीक्ष्णं

---

अग्निना तुर्वशं यदुं परावत उग्रादेवं हवामहे।
अग्निर्नयन्नववास्त्वं बृहद्रथं तुर्वीतिं दस्यवे सहः १८
नि त्वामग्ने मनुर्दधे ज्योतिर्जनाय शश्वते।
दीदेथ कण्व ऋतजात उक्षितो यं नमस्यन्ति कृष्टयः १९
त्वेषासो अग्नेरमवन्तो अर्चयो भीमासो न प्रतीतये।
रक्षस्विनः सदमिद्यातुमावतो विश्वं समत्रिणं दह ॥२०॥११॥४॥(३६)॥

कण्वो घौरः। मरुतः। गायत्री।

क्रीळं वः शर्धो मारुतमनर्वाणं रथेशुभम्। कण्वा अभि प्र गायत १



विष्णुं वा तादृशैर्गुणैः ॥ १ ॥ (ये) पृषत्यो वाहनान्येषामन्यदायुधमुच्यते। स्वप्रकाशोऽथवा विष्णुस्तल्लिङ्गैर्व्यज्यते सह। तत्तद्देवगतस्यापि विष्णोर्लिङ्गं च तद्भवेत् ॥ २ ॥ (इहेव) यत्ते वदन्ति वचनं मेघनादात्मकं हि तत्। इहापि श्रूयत इव वर्णा व्यक्तेरिवेति च। हस्तेष्वेषां कशाः सन्ति चित्रं मार्गेऽधिगम्यते। रेण्वादिसर्ववस्तूनां गमनान्मार्गचित्रता। विष्णोस्सर्वं जगच्चित्रं मार्गे संप्रेर्यतेऽमुना ॥ ॥ ३ ॥ (प्रवः) शोधकाय प्रधानाय वो बलाय च वायवे। शुद्धाय वा सुप्रकाशज्ञानायातिबलाय च। गायत ब्रह्म देवत्तं देवेषु ततमीश्वरम्। प्रीतिर्वायोर्विष्णुगानाद्वेदाख्यं ब्रह्म विष्णवे। देवैरधीयमानत्वाद्देवत्तं ब्रह्म वैष्णवम् ॥ ४ ॥ (प्रशंसा) अहन्तव्यत्वतस्त्वघ्न्यं वायुं वृषभरूपिणम्। क्रीडन्तं वेदरूपासु गोषु तं स्तुहि मारुतम्। माभिर्वेदैः स्तुतत्वेन मारुतो विष्णुरेव वा। भक्षणार्थं रसस्यासौ ववृधे मरुतां पिता ॥ ५ ॥ १२ ॥ (कोवः) आसमन्तादुत्तमः कः प्रधानो वायुरेव वः। विष्णोराक्षेप एव स्यात्को नामास्ति परस्त्विति। त्वत्पर्यन्तं च वर्षिष्ठः को भवेदिति वा भवेत्। आधूतयो दिवो ग्मश्च भूम्या इत्यन्वयो भवेत्। तस्मादन्तं प्रतीवैतज्जगत्सन्धूनुथाखिलम् ॥ ६ ॥ (निवः) नीचैर्धृतो मानुषो वो मार्गायोग्राय मन्यवे। न पूर्यते च कोपाय स्वल्पत्वान्मानुषः क्वचित्।



---

ये पृषतीभिर्ऋष्टिभिः साकं वाशीभिरञ्जिभिः। अजायन्त स्वभानवः २
इहेव शृण्व एषां कशा हस्तेषु यद्वदान्। नि यामञ्चित्रमृञ्जते ३
प्र वः शर्धाय घृष्वये त्वेषद्युम्नाय शुष्मिणे। देवत्तं ब्रह्म गायत ४
प्र शंसा गोष्वघ्न्यं क्रीळं यच्छर्धो मारुतम्।
जम्भे रसस्य वावृधे ॥ ५ ॥ १२ ॥
को वो वर्षिष्ठ आ नरो दिवश्च ग्मश्च धूतयः। यत्सीमन्तं न धूनुथ ६
नि वो यामाय मानुषो दध्र उग्राय मन्यवे। जिहीत पर्वतो गिरिः ७

बहुवर्षयुतोत्युच्चगिरिर्मार्गे हि वोऽत्यजत् । मूलं ॥ ७ ॥ (येषां) येषां
तथा ज्मेषु मार्गेष्वितिभिया धरा । कम्पते जीर्णराजेव ॥ ८ ॥
(स्थिरंहि) स्थिरं वो जननं यतः । जाता वायोर्दिवि वयो मातुः
प्राप्तानि रेतवे । निर्गन्तुं तत्क्षणेनैव सर्वलोकाटनाय हि । यौवनं ते
युवानो हि निसर्गान्मातुराजनेः । मातुरेव प्रसादेन सम्यक्तद्विविधं
बलम् । प्रज्ञाबाहुबलं यस्मात्तस्मा- ॥ ९ ॥ (उदु) ह्निश उदापिरे ।
ते गिरः सूनवो देव्या वाश्रा वचनशीलिनः । अभिजन्मानुसारेण
गुणान्पातुमुदापिरे ॥ १० ॥ १३ ॥ (त्यश्चित्) 'पद्भ्यां भूमि'रिति-
श्रुत्या सुता विष्णोर्वसुन्धरा । तज्जत्वात्पर्वता विष्णोर्नप्तारः सेचनाद्धि
मिट् । हरिस्तमपि मेर्वादिं मरुतश्चावयन्ति हि । अमृध्रम-
प्रधृष्यत्वा- ॥ ११ ॥ (मरुतः) द्वलं यदपि वोऽखिलम् । जनां-
श्चावयितुं स्थानाच्छक्ताः सम्यग्गिरीनपि ॥ १२ ॥ (यद्ध) कुर्वन्ति
शास्त्रसंवादं मार्गे शृण्वन्ति केचन । तेषां मध्ये हि मरुतां ॥ १३ ॥
(प्रयात) शीभं क्षिप्रं प्रयात नः । मदं कुरुत तत्रैव दोहनान्यत्र सन्ति
हि ॥ १४ ॥ (अस्ति) सर्वमायुर्जीवसेऽस्ति प्रसादान्मरुतां हि नः ॥
॥ १५ ॥ १४ ॥ ५ ॥ (३७) ॥

---

येषामज्मेषु पृथिवी जुंजुर्वाँ इव विश्पतिः । भिया यामेषु रेजते ८
स्थिरं हि जानमेषां वयो मातुर्निरेतवे । यत्सीमनु द्विता शवः ९
उदु त्ये सूनवो गिरः काष्ठा अज्मेष्वत्नत ।
वाश्रा अभिज्ञु यातवे ॥ १० ॥ १३ ॥
त्यं चिद्धा दीर्घं पृथुं मिहो नपातममृध्रम् । प्र च्यावयन्ति यामभिः ११
मरुतो यद्ध वो बलं जनाँ अचुच्यवीतन । गिरीँरचुच्यवीतन १२
यद्ध यान्ति मरुतः सं ह ब्रुवतेऽध्वन्ना । शृणोति कश्चिदेषाम् १३
प्र यात शीभमाशुभिः सन्ति कण्वेषु वो दुवः । तत्रो षु मादयाध्वै १४
अस्ति हि ष्मा मदाय वः स्मसि ष्मा वयमेषाम् ।
विश्वं चिदायुर्जीवसे ॥ १५ ॥ १४ ॥ ५ ॥ (३७) ॥



(कद्ध) कदाऽनयोर्हस्तयोर्देवा धध्वे प्रियतातवत् । कदापि
यत्प्रियस्तातः कधप्रियइतीरितः । स्तृतं बर्हिर्यद्विषये ते प्रोक्ता वृक्त-
बर्हिषः ॥ १ ॥ (क्वनूनं) दिवः पृथिव्याश्चेदानीं क्व गच्छथ च किं
फलम् । न गच्छथ क्व वाप्येतज्ज्ञातव्यं तत्प्रसादतः । आह्वयन्ति क्व
वा गावो यथैव यवसार्थिनः । फलार्थिनः स्तुवन्तो वः क्वाह्वयन्ति
तथैव च ॥ २ ॥ (क्ववः) स्तुत्यानि वः सुखानि च कथं ज्ञेयानि नः
सदा । इत्यभिप्रायतः प्रश्नः कस्मिन्नो ज्ञापकस्त्विति । सुवितानि
सुभद्राणि सौभगं लक्षणं परम् ॥ ३ ॥ (यत्) पृश्निर्वेदः प्रश्नयोग्यः
पृश्निमाता हरिस्ततः । ज्ञेयस्तस्यापि विज्ञाता मारुतश्चेत्सुता गिरः ।
मानुषा यदि यूयं वः स्तोता देवो भवेदपि ॥ ४ ॥ (मावः) न
स्यादसेव्यः स्तोताऽत्र यथा यवसगोचरे । गोप्राप्ये तु मृगो सेव्यो
यममार्गं न च व्रजेत् । याच्ञारीति विशेषोऽयं निन्दास्तुत्येकदेश-
युक् ॥ ५ ॥ १५ ॥ (मोषुणः) मावधीन्नः कश्चिन्मृत्युः परतः
परतोऽपि च । दुर्हणा दुःखदा हन्त्री या तु सा तृष्णया सह ॥६॥
(सत्यं) अप्रमेया यथा सत्यं धन्वन्नपि हि सेचनम् । रुजां विद्रावक-
स्यैव वायोः पुत्रा हि रुद्रियाः । विनाप्यचेतनं वातं वृष्टिं कृण्वन्ति

---

कण्वो घौरः । मरुतः । गायत्री ।

कद्ध नूनं कधप्रियः पिता पुत्रं न हस्तयोः । दधिध्वे वृक्तबर्हिषः १
क्व नूनं कद्वो अर्थं गन्ता दिवो न पृथिव्याः । क्व वो गावो न रण्यन्ति २
क्व वः सुम्ना नव्यांसि मरुतः क्व सुविता । क्वो३ विश्वानि सौभगा ३
यद्यूयं पृश्निमातरो मर्तासः स्यातन । स्तोता वो अमृतः स्यात् ४
मा वो मृगो न यवसे जरिता भूदजोष्यः ।
पथा यमस्य गादुप ॥ ५ ॥ १५ ॥
मो षु णः परापरा निर्ऋतिर्दुर्हणा वधीत् । पदीष्ट तृष्णया सह ६
सत्यं त्वेषा अमवन्तो धन्वञ्चिदा रुद्रियासः । मिहं कृण्वन्त्यवाताम् ७

हीच्छया ।७॥ (वाश्रेव) एषां सकाशाद्वृष्टिश्च विद्युद्भूमिं प्रकाशयेत् । गौर्वत्समिव भूम्यां च ॥ ८ ॥ (दिवाचित्) लोकं सिञ्चन्ति मातृवत् ॥ ९ ॥ (अध) मानुषादित्वमन्यच्च बिभेदेषां स्वनादपि । गृहमानिनो गृहाद्यं वा चचालैषां स्वनादपि ॥ १० ॥ १६ ॥ (मरुतः) अखिन्नैर्गमनैश्चैव दृढस्वीयैश्च पाणिभिः । अनुयात नदीश्चित्राः ॥ ११ ॥ (स्थिरावः) स्थिरास्सन्ति रथादयः ॥ १२ ॥ (अच्छ) ब्रह्मणश्च पतिं विष्णुं यथावद्व्याप्तया गिरा । जरायै संस्तुतित्वेन तृतीया भावरूपिणी । सर्वा विभक्तयश्चेत्थं भाववाचिन्य एव च । महाव्याकरणे सूत्रमिति संस्तुतिरूपतः । विद विष्णुं स्वप्रकाशमग्निवत्सूर्यवत्तथा । आह चात्मानमेवात्र 'दार्ढ्ये स्वप्रतियोगिता' । इति सूत्रात् ॥ १३ ॥ (मिमीहि) कीर्तिमस्य विष्णोः कुरु मुखे सदा । विस्तारयति पर्जन्यो यद्वद्वृष्टिं तथैव च । विस्तृणीहि तथेशस्य तथा कीर्तिं जगत्यपि ॥ १४ ॥ (वन्दस्व) पनस्युं ज्ञानशीलं च विज्ञेयं गणमर्किणम् । अभवन् ज्ञापका वृद्धा अस्माकं तदनुग्रहात् ॥ १५ ॥ ॥ १७ ॥ ६ ॥ (३८) ॥

---

वाश्रेव विद्युन्मिमाति वत्सं न माता सिषक्ति । यदेषां वृष्टिरसर्जि ८
दिवा चित्तमः कृण्वन्ति पर्जन्येनोदवाहेन । यत्पृथिवीं व्युन्दन्ति ९
अध स्वनान्मरुतां विश्वमा सद्म पार्थिवम् ।
अरेजन्त प्र मानुषाः ॥ १० ॥ १६ ॥
मरुतो वीळुपाणिभिश्चित्रा रोधस्वतीरनु । यातेमखिद्रयामभिः ११
स्थिरा वः सन्तु नेमयो रथा अश्वास एषाम् । सुसंस्कृता अभीशवः १२
अच्छा वदा तना गिरा जरायै ब्रह्मणस्पतिम् । अग्निं मित्रं न दर्शतम् १३
मिमीहि श्लोकमास्ये पर्जन्य इव ततनः । गाय गायत्रमुक्थ्यम् १४
वन्दस्व मारुतं गणं त्वेषं पनस्युमर्किणम् ।
अस्मे वृद्धा असन्निह ॥ १५ ॥ १७ ॥ ६ ॥ (३८) ॥



(प्रयत्) परावतो हरेः स्थानान्मानं शोचिरिवास्यथ । सूर्यादयो यथा शोचिर्दूरादस्यन्ति जन्तुषु । एवं ज्ञानं सम्प्रदायान्मरुतो विष्णुरेव वा । इत्थं यथा सर्वदृश्यं तत्तथा भवतां कृतम् । एवं यत्र क्व वा ज्ञानाद्बलाद्वा गच्छथ क्वचित् । स्वतन्त्रत्वात्परापेक्षा नहि वः क्वचिदिष्यते । किञ्चिद्याथ बलात्किञ्चिद्धूनुथ स्वबलाद्धि तत् ॥ १ ॥ (स्थिरावः) शत्रूणामपनोदाय सन्ति वस्त्विह हेतयः । स्तम्भनाय च शत्रूणां सुदृढान्येव ताः सदा । स्थिरत्वं दीर्घकालत्वं वीळुत्वं दृढता तथा । युष्माकं तविषी तेजो बलमस्त्युत्तमं सदा । मायिनो नहि मर्त्यस्य बलं तेजोऽथवोत्तमम् ॥ २ ॥ (परा) स्थिरं चाज्ञानपापादि तद्भक्ताय पराहथ । गुरूनपि नरान्नित्यं गुणैर्वर्तयथाञ्जसा । पर्वतानां पृथिव्याश्च दिशो नित्यं वियाथन । वनिनश्च तरून्सम्यग्भजनीयान्सुरान्हरिः ॥ ३ ॥ (नहिवः) भूमौ दिवि च वः शत्रुः क्वचिन्नैव लभ्यते । रिशादसः सुसुखिनः सुखेन शमदन्ति यत् । बलं तेजोऽपि वो ह्यस्ति व्याप्ता नित्यतया युजा । अद्याप्याधर्षणायैव

---

कण्वो घौरः । मरुतः । प्रगाथः=विषमा बृहत्यः,
समाः सतोबृहत्यः ।

प्र यदित्था परावतः शोचिर्न मानमस्यथ ।
कस्य क्रत्वा मरुतः कस्य वर्पसा कं याथ कं ह धूतयः १
स्थिरा वः सन्त्वायुधा पराणुदे वीळू उत प्रतिष्कभे ।
युष्माकमस्तु तविषी पनीयसी मा मर्त्यस्य मायिनः २
परा ह यत्स्थिरं हथ नरो वर्तयथा गुरु ।
वि याथन वनिनः पृथिव्या व्याशाः पर्वतानाम् ३
नहि वः शत्रुर्विविदे अधि द्यवि न भूम्यां रिशादसः ।
युष्माकमस्तु तविषी तना युजा रुद्रासो नू चिदाधृषे ४

निखिलाशुभसन्ततेः ॥४॥ (प्रवेपयन्ति) प्रवेपयन्ति पर्वतान्विविश्चन्ति वनस्पतीन् । जनिपर्ववतो जीवान्सम्प्रेरयति केशवः । भजनीयपतीन्ब्रह्म पूर्वांश्च फलदानतः । तारतम्येन सम्यक् च विवेचयति सर्वदा । सर्वप्रजास्वतिष्ठन्त प्राप्तास्ताभिस्सहैव च । मत्ता इव प्रेरयन्ति शुभाशुभकृतौ नरान् ॥ ५ ॥ १८ ॥ (उपो) अयुङ्ध्वं पृषतीश्चैव रोहितं पृष्ठतो रथे । वो यामं प्रति दार्ढ्याय शेषमश्रेत्पुनर्धरा । भीतिमापुर्मानुषाश्च ॥ ६ ॥ (आवः) क्षिप्रं वः प्राप्तये सुखम् । रक्षां वृणीमहे युष्मद्गन्ताऽद्यापि च नोऽवसा । भीतियुक्ताय कण्वाय मह्यं ॥ ७ ॥ (युष्मेषितः) युष्माभिरेव च । प्रेरितोऽथ नियन्तृत्वाद्युष्माकं मानुषेण वा । बाह्यदृष्टया त्वभूतीर्नो य इच्छति तमोऽञ्जसा । बलेन च द्रावयत युष्मदीयोतिभिस्तथा ॥ ८ ॥ (असामि ॥ ९ ॥ असाम्योजः) ओजो समं बिभृथ च मखेज्याः सममुत्तमम् । सुदानशीलाः कण्वाय दत्ता सममभीप्सितम् । असमैर्नोप्यभिप्रायैर्गन्त वृष्टिं न विद्युतः ॥ १० ॥ १९ ॥ ७ ॥ (३९) ॥

प्र वेपयन्ति पर्वतान्वि विञ्चन्ति वनस्पतीन् ।
प्रो आरत मरुतो दुर्मदा इव देवासः सर्वया विशा ॥ ५ ॥ १८ ॥
उपो रथेषु पृषतीरयुग्ध्वं प्रष्टिर्वहति रोहितः ।
आ वो यामाय पृथिवी चिदश्रोदबीभयन्त मानुषाः ६
आ वो मक्षू तनाय कं रुद्रा अवो वृणीमहे ।
गन्ता नूनं नोऽवसा यथा पुरेत्था कण्वाय बिभ्युषे ७
युष्मेषितो मरुतो मर्त्येषित आ यो नो अभ्व ईषते ।
वि तं युयोत शवसा व्योजसा वि युष्माकाभिरूतिभिः ८
असामि हि प्रयज्यवः कण्वं दद प्रचेतसः ।
असामिभिर्मरुत आ न ऊतिभिर्गन्ता वृष्टिं न विद्युतः ९
असाम्योजो बिभृथा सुदानवोऽसामि धूतयः शवः ।
ऋषिद्विषे मरुतः परिमन्यव इषुं न सृजत द्विषम् ॥१०॥१९॥७॥(३९)॥





(उत्तिष्ठ) देवयन्तः पूजयन्तः स्तुवन्तोऽतिकृताशनः । प्राशू- ॥ ॥ १ ॥ (त्वामित्) र्वायोः सुतेत्येव सहसस्पुत्र इत्यथ । तद्व्यंग्यत्वाद्धरिः प्रोक्तः शक्रस्तत्सुत एव च । युद्धं हितधनं प्रोक्तं निहितं धनमेव वा । स्वश्व्यं तु स्विन्द्रियफलमाचकेऽपश्यदित्यपि ॥ २ ॥ (प्रैतु) पतिस्तु ब्रह्मणो विष्णुर्वागीशत्वात्समीरणः । अग्रतो यात्वसावस्मत्कार्येष्वेवं सरस्वती । सूनृता वैष्णवी वाग्वा यज्ञं वीरं नरं प्रति । नयन्तु देवाः सर्वेऽपि यत्पञ्चजनवर्धनः । पङ्क्तिराधा हरिस्तेन वीरो नर्यस्स एव च । देवगन्धर्वनृपितृदैत्याः पञ्चजनाभिधाः ॥३॥ (योवाघते) वाघते स्तुवते विष्णुर्ददाति सूनरं वसु । सुष्ठु येन नरो भूयात्सूनरं ज्ञानमुच्यते । स धत्तेऽचाक्षयां कीर्तिमिळामन्नं यजामहे । सुवीर्यत्वात्सुवीरं तत्सुप्रतूर्तिः सुपेशकृत् । प्राणचेष्टानिमित्तत्वात्तदनेह इतीरितम् ॥ ४ ॥ (प्रनूनं) स एव भगवान्विष्णुर्मन्त्रं तद्विषयं वदेत् । उक्थमुत्थापकत्वेन स एव भगवान्हरिः । तन्मन्त्रवाच्या देवाश्च ॥

कण्वो घौरः । ब्रह्मणस्पतिः । प्रगाथः=विषमा बृहत्यः,
समाः सतोबृहत्यः ।

उत्तिष्ठ ब्रह्मणस्पते देवयन्तस्त्वेमहे ।
उप प्र यन्तु मरुतः सुदानव इन्द्र प्राशूर्भवा सचा १
त्वामिद्धि सहसस्पुत्र मर्त्य उपब्रूते धने हिते ।
सुवीर्यं मरुत आ स्वश्व्यं दधीत यो व आचके २
प्रैतु ब्रह्मणस्पतिः प्र देव्येतु सूनृता ।
अच्छा वीरं नर्यं पङ्क्तिराधसं देवा यज्ञं नयन्तु नः ३
यो वाघते ददाति सूनरं वसु स धत्ते अक्षिति श्रवः ।
तस्मा इळां सुवीरामा यजामहे सुप्रतूर्तिमनेहसम् ४
प्र नूनं ब्रह्मणस्पतिर्मन्त्रं वदत्युक्थ्यम् ।
यस्मिन्निन्द्रो वरुणो मित्रो अर्यमा देवा ओकांसि चक्रिरे ॥ ५ ॥ २० ॥

॥५॥२०॥ (तमित्) यद्वाच्या देवतास्तु ताः। तमेव मन्त्रं वोचेम ज्ञानार्थं सुखकारणम्। इमां वाचं स्वीकुरुत सकाशाद्वोऽखिलं शुभम्। अश्नवा- ॥ ६ ॥ (कोदेवयन्तं) नतिदौर्लभ्याद्देवभक्तं क आप्नुयात्। यजमानं वानुगच्छेत्कः सम्यक् स्तृतबर्हिषम्। तत्र तत्र प्रस्थितोऽसौ यजमानः सुखैः स्वयम्। स्वेष्टस्थानेषु चान्तर्वा विष्णुरन्तर्गतो यतः। तद्भक्त्वेन क्षयं स्थानं प्राप्नोति ज्ञानतो यजन् ॥ ७ ॥ (उपक्षत्रं) उपपृक्तः क्षत्रियैः स आवेशेन जनार्दनः। हन्ति शत्रूंश्च तैर्देवो भये च स्वाश्रयं ददौ। वर्ताऽभिगन्ता तरुता जेता चास्य न हि क्वचित्। युद्धं महाधनं त्वर्भं प्रसिद्धं धनमेव हि ॥ ८ ॥ २१ ॥ ८ ॥ (४०) ॥

॥ इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचितम् श्रीमदृग्भाष्यम् संपूर्णम् ॥ ॥ ॥ ॥ ॥

॥ श्रीकृष्णार्पणमस्तु ॥



---

तमिद्वोचेमा विदथेषु शंभुवं मन्त्रं देवा अनेहसम्।
इमां च वाचं प्रतिहर्यथा नरो विश्वेद्वामा वो अश्नवत् ६
को देवयन्तमश्नवज्जनं को वृक्तबर्हिषम्।
प्रप्र दाश्वान्पस्त्याभिरस्थितान्तर्वावत्क्षयं दधे ७
उप क्षत्रं पृञ्चीत हन्ति राजभिर्भये चित्सुक्षितिं दधे।
नास्य वर्ता न तरुता महाधने नार्भे अस्ति वज्रिणः ॥८॥२१॥८॥(४०)॥